# त्रिपुरासारसमुच्चयः

[ तन्त्रशास्त्रम् ]

श्रीनागभट्टविरचितः।

श्रीगोविन्दाचार्य्यकृतव्याख्यया समलङ्कृतः।

---

पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च।

द्वितीयसंस्करणम्।





कलिकातानगरे

कलिकाता यन्त्रे

मुद्रितः।

१८९०।



पण्डितकुलपतिः
श्रीजीवानन्दविद्यासागर वि, ए,
PANDIT KULAPATI
JIBANANDA VIDYASAGARA, B. A.
*Superintendent, Free Sanskrit College, Calcutta.*

# त्रिपुरासारसमुच्चयः



## प्रथमः पटलः ।

प्रह्वप्राचीनबर्हिःप्रमुखसुरवरानीककोटीरकोटि-
श्लिष्टस्पष्टेन्द्रनीलामलमणिमधुपश्रेणिजुष्टं क्रियात् ।
श्रीपादाम्भोजयुग्मं नखमुखविलसद्रश्मिकिञ्जल्कपुञ्जम्
शिञ्जन्मञ्जीरहंसीमुखरितमनिशं मङ्गलं वो भवान्याः ॥१॥

---

नत्वा शङ्करचरणं श्रीमद्गोविन्दशर्मणा ।
त्रिपुरासारटीकेयं रच्यते सारदृश्वना ॥

तस्यै दिशे सततमञ्जलिरेष पौष्पः प्रक्षिप्यते मुखरितो मधुपैर्विरेफैः ।
जागर्ति यत्र भगवान् गुरुचक्रवर्त्ती विश्वोदयप्रणयनाटकसूत्रधारः ॥

श्रीमद्गुरुपरमेश्वरपदारविन्दप्रणिहितभक्तिभरावनम्रशिरसा परमाचार्यप्रवर-प्रसादलब्धविज्ञानेन सर्वागमपारावारपारगतेन विज्ञानदेशिकेनाचार्यनागभट्टेन विरचितस्य त्रिपुरासारसमुच्चयस्य सम्प्रदायदीपिका व्याख्या आरभ्यते । तत्र सदाचारानुमितश्रुतिबोधनं परदेवतास्मरणपूर्वकमाशीर्वचनं शिष्यशिक्षार्थं निबध्नाह प्रह्वप्राचीनबर्हिरित्यादि । भवान्याः श्रीपादाम्भोजयुग्मं वो युष्माकं मङ्गलं क्रियात् करोतु । कीदृशं प्रह्वप्राचीनबर्हिःप्रमुखसुरवरानीककोटीरकोटिश्लिष्टस्पष्टेन्द्र-नीलामलमणिमधुपश्रेणीजुष्टं प्राचीनबर्हिः प्राच्यधिपस्तत्प्रमुखास्तत्प्रधाना ये प्रह्वा नम्रीभूता ये देवश्रेष्ठास्तेषां यः समूहः तस्य मुकुटसम्बन्धी व्यक्तीभूतो यः इन्द्र-नीलामलमणिः स एव भ्रमरः तस्य पंक्त्या श्रेण्या युक्तम् । अम्भोजद्योतनमाह नख-मुखेत्यादि । नखानां मुखे विलसत् यद्रश्मि तदेव किञ्जल्कसमूहो यस्य तादृशम् । पुनः कीदृशं शिञ्जन्मञ्जीरहंसीमुखरितं शब्दायमानम् ॥ १ ॥

भक्त्या गुरोर्भवपयोनिधिसेतुहेतून्
श्रीपादपद्मयुगरेणुकणान् प्रणम्य।
लम्बोदरञ्च कथयामि गुरूपदिष्ट-
माराधनक्रममहं कुलनायिकायाः॥ २॥

स्नात्वा यथाविधि विधौतकराननाङ्घ्रि-
राचम्य सम्यगमलाम्बरयज्ञसूत्रः।
प्रागाननो धनददिग्वदनोऽथ वापि
बद्धासनो गणपतिञ्च गुरुञ्च नत्वा॥ ३॥

संयोज्य जीवमथ दुर्गममध्यनाडी-
मार्गेण पुष्करनिविष्टशिवे सुसूक्ष्मे।
हंसेन देहममरेन्द्रपुरोगतेन
मार्त्तेन्दुना भसितसाद् विदधीत मन्त्री॥ ४॥

---

इष्टदेवतां नमस्कृत्य गुरुनमस्कारमाह भक्त्या इति। गुरोः पादपद्मरेणुकणान् प्रणम्य लम्बोदरञ्च प्रणम्य कुलनायिकाया आराधनविधिं कथयामि। कीदृशान् तान् संसार एव पयोनिधिर्दुस्तरत्वात् तदुत्तरणे सेतुहेतून् लीलातरण-हेतून्। आराधनक्रमं कीदृशं गुरुणोपदिष्टं विना आगमज्ञानानर्थक्यप्रसङ्गात्। तस्मादगुरुदेवतयोरैक्यं कर्त्तव्यम्। तदुक्तं यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति॥ २॥

गुरुदेवतादि नमस्कृत्य उपासनाप्रकारमाह स्नात्वेति। नद्यादौ यथाविधि स्नात्वा सन्ध्यावन्दनादिकं कृत्वा यथाविधि आचम्य प्रक्षालितनिर्मलयज्ञसूत्रः सन् पूर्वाभिमुखः यथायोग्यं पद्मासने स्वस्तिकासने वा उपविश्य वामे गुरुं दक्षिणे गणेशं मध्ये इष्टदेवतां नत्वा वक्ष्यमाणभूतशुद्धिं विद-धीत। दुर्गममध्यनाडीमार्गेण सुषुम्नान्तर्वर्त्तिना चित्रामार्गेण पुष्करनिविष्टशिवे सहस्रदलकमलकूटस्थपरमात्मनि जीवं जीवात्मानं संयोज्य षट् पञ्चाशत्तत्त्व-प्रासवृत्तिर्गतितत्त्वान्यपि तत्र नयेत्। हंसेन हंस इति मन्त्रेण अमरेन्द्रपुरोगतेन

सांस्वादिनाथ मरुताऽपनयन्नशेषम्
तद्भस्मराशिमखिलं भुवनं सवीन।
संप्लावयन् वलभिदा परिचिन्तयेत् स्व-
मात्मानममसि घटेन सबिन्दुकेन ॥ ५ ॥
ततो हृदबुद्बुदमध्यवर्त्ति स्फुरत्प्रभाकरमण्डलमण्डभाजम्।
ध्यात्वा तदन्तस्तु वनाढ्यभूमिं विचिन्तयेद्भूतलमेतदन्तः ॥६॥
स्मितप्रसवशोभितं नवमनिन्द्यगन्धोत्कटम्
कदम्बवनमुच्चकैरिह समन्ततश्चिन्तयेत्।
तदन्तरपि मण्डितं मणिगणैर्महामण्डपम्
हिरण्मयमुपाश्रितं द्युमणिमण्डलाभप्रभम् ॥७॥
चतुर्द्वारोपेतं मणिमयचतुस्तोरणयुतम्
स्फुरत्ताराराथद्युतिसितवितानाङ्कमुपरि।

---

सार्द्धेन्दुना अमरेन्द्री रकारः तत्पुरोगतोरेफः अर्द्धेन्दुर्बिन्दुस्तेन रमिति मन्त्रेण स्वकं स्वशरीरं भस्मितसात् भस्मसात् कुर्य्यात् भस्मीभूतं स्वशरीरमिति चिन्तयेदित्यर्थः ॥ ३ ॥ ४ ॥

सास्वादिनाथ मरुतेति। सास्वं विसर्गेनौष्ठस्वादिर्बिन्दुः मरुत् यकारः तेन यमिति वायुबीजेन भस्मराशिं निराकुर्वन् सानुस्वारेण वलभिद्बीजेन लकारेण सकलं भुवनं प्लावितं कुर्वन् स्वमात्मानं अमृतमयाम्भसि सानुस्वारेण घटेन चिन्तयेत्। घटशब्दे नाधिष्ठानलक्षणया जलं लक्षितम्। तेन च तद्बीजेन वकारेण सानुस्वारेणामृतमयाम्भसि आत्मानं ध्यायेदित्यर्थः ॥ ५ ॥

तत इति। तदनन्तरं तत्कमलवेगमध्यवर्त्ति स्फुरद्दीप्तिसमूहं प्रभाकरं ध्यायेत्। तदभ्यन्तरे चतुर्दश भुवनानि तेषामभ्यन्तरे भूमितलं विचिन्त्य तन्मध्ये कदम्बवनं चिन्तयेत्। कीदृशं कदम्बवनं प्रकाशकुसुमशोभितं नवं नूतनम् अनिन्द्यगन्धोत्कटं स्वकीयसौरभशालि वर्त्तते महत्कदम्बवनं तदभ्यन्तरे मणिभिर्भूषितं सौवर्णमहामण्डपं सूर्य्यमण्डलाभदीप्तं चिन्तयेत् ॥ ६ ॥ ७ ॥

कीदृशं चतुर्द्वारैर्युक्तं मणिमयैश्चतुर्भिस्तोरणैः सहितम्। स्फुरन्ती या शशि-

स्थितौ द्वारे द्वारे रुचिरमणिमाल्याम्बरधरौ
गणेशक्षेत्रेशौ च सपरिकरौ यस्य मण्डितौ ॥ ८ ॥

पूर्वद्वारि सवाहनं हरिहयं तस्यैव याम्ये यमम्
पाश्चात्ये वरुणं तथैव तदुदग्द्वारे कुबेरं स्थितम् ।
सङ्गीतादिरतैस्तदन्तरमरस्त्रीणां गणैराकुलम्
ध्यायेत् सम्यगनाकुलेन मनसा गन्धर्वमुख्यैरपि ॥९॥

तस्य मध्यगतसिंहविष्टरे पद्ममष्टदलशोभितं ततः ।
उद्यदुष्णकरमण्डलोज्ज्वलं चिन्तयेदरुणचारुकेशरम् ॥१०॥

तत्कर्णिकोपरि कपञ्चममम्बु तुर्य-
युक्तं मनुस्वरतदन्तयुतं विधाय ।
प्रेतं धिया तदुपरि त्रिदशेन्द्रवन्द्याम्
ध्यायेत्त्रिलोकजननीं दयितां पुरारेः ॥ ११ ॥

---

दीप्तिमद्वत् सितेन वितानेनोपरि चित्रं यस्य मण्डपस्य तम्। प्रतिद्वारं सपरिवारौ गणेशक्षेत्रपालौ स्थिताविति चिन्तयेत् ॥ ८ ॥

पूर्वेति। तस्य मण्डपस्य पूर्वद्वारि ऐरावतसहितमिन्द्रं ध्यायेत्। दक्षिणद्वारि महिषसहितं यमम्। पश्चिमद्वारि मकरसहितं वरुणम्। उत्तरद्वारि नरयानं कुबेरं ध्यायेत्। सवाहनानुकर्षि सकलान्यपि यदभ्यन्तरं नृत्यादिरतैः अमरस्त्रीसमूहैः व्याप्तं चिन्तयेत्। गन्धर्वकुलैरप्याकुलं चिन्तयेत् ॥ ९ ॥

तस्येति। तस्य मण्डपस्य मध्यस्थितसिंहासने अष्टदलपद्मं चिन्तयेत्। कीदृशं पद्मं प्रातःकालीनसूर्यविम्बतुल्यम् अरुणमित्यर्थः तथा अरुणं लोहितं मनोहारि च किञ्जल्कं यस्य ॥ १० ॥

तदिति। तस्याष्टदलकर्णिकाया उपरि ह्सौं इत्यासनवीजं विधाय तदुद्धारप्रकारमाह कं जलं तद्वीजं वकारः तत्पञ्चमो हकारः अम्बु रकारः तत्तुर्यः सकारः तेन युक्तं मनवश्चतुर्दश तदुपलक्षितसंख्यकस्वर औकारः तदन्तः अकारः ताभ्यां युक्तम् एतावता ह्सौं इति भवति। एतद्देव्यासनवीजं देव्याः तदुपरि प्रेतं शिवरूपं विचिन्त्य तस्योपरि त्रिलोकमातरं हरवल्लभां ध्यायेत् ॥ ११ ॥

सुरुचिरनासिकां सुनयनां सुकपोलतला-
मरुणजटाकलापकलितामलचन्द्रकलाम्।
विलसदष्टमीन्दुकमनीयललाटतटाम्
परिणतशारदेन्दुरुचिराननपङ्कहाम्॥ १२॥

बन्धूकारुणकान्तिदन्तवसनामुत्तुङ्गवृत्तस्तनीम्
युक्तां बालमृणालनाललिततैर्भव्यैश्चतुर्भिर्भुजैः।
तत्कालस्मितपद्मपत्रविलसन्नेत्रद्वयोद्भासिताम्
ताराधीशदिनेशकुण्डलधरामुल्लासिचिल्लीलतीम्॥ १३॥

वलित्रयोद्भासितदीनमध्यां प्रदक्षिणावर्त्तगभीरनाभीम्।
कस्तूरिकाकर्दमलेखयेव विराजमानामपि रोमराज्या॥१४॥

स्मितनवबन्धुजीवकुसुमारुणसद्वसनाम्
मणिमयरसनाकलापकलितोरुनितम्बतटाम्।
करिकरपीवरोरुयुगलां वरहंसगतिम्
चरणतलप्रभाविजितपङ्कजगर्भदलाम्॥ १५॥

---

ध्येयदेवीस्वरूपमाह सुरुचिरेत्यादि। अरुणजटासमूहनिबद्धचन्द्रशोभभागां तथा प्रदक्षिणावर्त्तगभीरनाभीं प्रदक्षिण आवर्त्तः भूमिर्यस्याः तादृश्या नाभ्या युक्तां कस्तूरिकाकर्दमरेखातुल्यया रोमराज्या युक्तां स्मितनवबन्धूककुसुमारुणसद्वसनां विकसितबन्धूककुसुमारुणवस्त्रां मणिमयरसनाकलापकलितोरुनितम्बतटां मणिमयक्षुद्रघण्टिकासम्बन्धकटिदेशां करिकरपीवरोरुहस्तयुगलां हस्तिस्थूलहस्तजघनां चरणतलप्रभाविजितपङ्कजगर्भदलां गर्भोऽभ्यन्तरं प्रणतपुरन्दरप्रमुखस्वर्गिनिकायलसन्मणिमुकुटप्रभापटलपाटलिताङ्घ्रियुगां नम्रीभूतेन्द्रोपक्रमदेवसमूहदीप्यन्मणिमुकुटदीप्तिसमूहश्वेतरक्तपदद्वयां मणीनां नानाविधत्वाद्दीप्तेः पाटलत्वम्। सुरुचिरेति। अतिमनोहारिसन्ध्याकालीनाम्बुददीप्तिसमूहजुषा सेवितेन निजतनुतेजसा स्वशरीरतेजसा कवलितं व्याप्तं दिग्वलयञ्च यया ताम्. दिव्याम्बुवाहेति दिव्यमेघसमूहोदरनिर्गतैर्मुक्ताफलैर्विरचितां रुचिरां मनोहारिणीं एकावलीम्। कौ मस्तकस्तस्मिन् गले लम्बितौ अथवा कान्ते कमनीये गले। पाशाङ्कुशे ऊर्द्ध्ववामदक्षहस्ताभ्यां वराभये अधःकराभ्यां दधानाम्। रत्नप्रकाण्डरचिताभरणाभिरामां रत्नप्रकाण्डं रत्नश्रेष्ठेन

प्रणतपुरन्दरप्रमुखलेखनिकायलसन्-
मणिमुकुटप्रभापटलपाटलिताङ्घ्रियुगाम्।
सुरुचिरसान्ध्यवारिधरकान्तिकलापमुषा
निजतनुतेजसा कवलिताम्बरदिग्वलयाम्॥ १६॥

दिव्याम्बुवाहनिवहोदरमुक्तमुक्त-
मुक्ताफलैर्विरचितां रुचिरां वहन्तीम्।
एकावलीममलकोमलकान्तियुक्ताम्
कान्ते गले च हरिचन्दनलिप्तगात्राम्॥ १७॥

पाशाङ्कुशाभयवरोद्यतपाणिपद्माम्
रत्नप्रकाण्डरचिताभरणाभिरामाम्।
स्मेराननां रुचिरदन्तमरीचिवीचि-
धौतारुणाधरदलां सुरवृन्दवन्द्याम्॥ १८॥

स्वैक्येन त्रिभुवनमातरं मृडानीम्
ध्यात्वैवं निजकुलकामधेनुमेनाम्।
हृत्पद्मं पुनरपि जीवमानयेत् स्वम्
आकाशाम्भोरुहकुटीरनिविष्टहंसात्॥ १९॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
प्रथमः पटलः॥

---

रचितानि यान्याभरणानि तैरभिरामां मनोहराम्। रुचिरदन्तमरीचिवीचिधौतारुणाधरदलां रुचिरा मनोहरा ये दन्तानां मरीचयो रश्मयस्तेषां वीचिभिस्तरङ्गरूपैः धौतं निर्मलीकृतम् अरुणाधरपल्लवं यस्याः ताम्। सुरवृन्दैर्देववृन्दैर्वन्द्यां सेविताम्॥ स्वैक्येनेति एनां त्रिभुवनजननीं भवानीं स्वैक्येन आत्मैक्येन विचिन्त्य पुनरपि जीवात्मानम् आकाशपद्मकुटीरनिविष्टपरमात्मनः सकाशात् स्वीयं हृत्कमलम् आनयेत्। हंस इति मन्त्रेण चतुर्विंशतितत्त्वान्यपि स्वं स्वं स्थानं नयेत् इत्यन्यग्रन्थसरसात्। इति भूतशुद्धिः॥ १२—१९॥

इति त्रिपुरासारसमुच्चयटीकायां प्रथमः पटलः।

# द्वितीयः पटलः ।

अङ्गुष्ठादिकनिष्ठिकावधिकरद्वन्द्वाङ्गुलीषु न्यसेत्
बाणान् पञ्च गुरूपदिष्टविधिना ब्रूमो वयं तानिह ।
अद्रीशो मुखवृत्तवह्निसहितस्त्वाद्यं सदण्डस्त्विमू-
र्त्याक्रान्ताननवृत्तमेव खलु तद्बीजं द्वितीयं भवेत् ॥ १ ॥
मुखान्तस्थितं देवराजाधिरूढं सवामेक्षणं बिन्दुपूर्वेण युक्तम् ।
अपूर्वं सवह्निरिषष्ठस्वरार्द्धेन्दुपेशं कतुर्य्यं कपूर्वेण युक्तम् ॥ २ ॥
न्यस्याङ्गान्यपि चाङ्गुलीषु करयोः स्थित्या कलान्यासकम्
कुर्य्यात् साधकपुङ्गवो भगपरं माया कुलान्तं क्रमात् ।
बीजानां त्रयमर्द्धचन्द्रसहितं विन्यस्य मूर्ध्नि स्वके
सानन्तं मुखवृत्तके कगतकं संवर्त्तकं विन्यसेत् ॥ ३ ॥

---

एवं भूतशुद्धिं विधाय परदेवतास्वरूपमात्मानं बुद्ध्वा वक्ष्यमाणं न्यासजालं विद्धते इत्याह अङ्गुष्ठेत्यादिना । अङ्गुष्ठोपक्रमकं कनिष्ठान्तं हस्तद्वयाङ्गुलीषु बाणान् न्यसेत् । ते च द्रावणक्षोभणवशीकरणमारणमोहनाः पञ्च बाणाः तेषां बीजान्याह क्रमशः । अद्रीश इति । अद्रीशोदकारः मुखवृत्तः न्यस्तव्याकारः वह्निरेफः ताभ्यां सहितोऽद्रीश आद्यं बीजं भवेत् सदण्डः सानुस्वारः तेन द्रामिति बीजं भवति तदेव बीजं त्रिमूर्त्या ईकारेण आक्रान्तम् अनेन स्थानं यस्य तत् द्वितीयबीजं भवति एतावता द्रीमिति भवति ॥ १ ॥

तृतीयबीजमुद्धरति मुखेति । मुखे न्यस्यत इति मुखं विसर्गः तदन्तः ककारः तदुद्धरेत् । कीदृशं देवराज इन्द्रः तद्बीजं लकारः तदुपरि स्थितं वामचक्षुषि न्यस्यते ईकारः तत्सहितं वह्नौ न्यस्यते यो विसर्गः तत्पूर्वो बिन्दुः तेन युक्तम् एतावता क्लीमिति बीजं भवति । चतुर्थमुद्धरति अपूर्वो बकारः वह्निरेफः लकारेण षष्ठस्वर ऊकारस्तेन च सहितम् एतावता ब्लूमिति बीजं भवति । पञ्चमबीजमुद्धरति कं अक्षं तद्बीजं वकारः तत्तुरीयः सकारः ककारपूर्वो विसर्गः तेन सहितम् एतावता सः इति भवति । सर्वत्र बीजं भवेदित्यनुषङ्गः ॥ २ ॥

न्यस्येति । स्थितिन्यासोक्तविधिना उभयकराङ्गुलीषु करतलयोश्च विन्यसेत् ।

सूक्ष्मादींश्चतुरो युगे नयनयो र्न्यस्येत्ततः श्रोत्रयोः
सार्द्धेन्दून् स्वकपोलयोर्भृगुयुगं प्राणद्वयेनान्वितम् ।
चन्द्रार्द्धाङ्कितमस्तकञ्च चिबुके श्वेतद्वयं विन्यसेत्
पश्चाद्गण्डयुगान्वितं शशिकुलोपेतोत्तमाङ्गं बुधः ॥ ४ ॥
दन्तपंक्तियुगले वकद्वयं सेन्दुखण्डरदनच्छदद्वयम् ।
ओष्ठयोर्घटयुगं ततो न्यसेद्दन्तयुग्ममुखपूर्वसंयुतम् ॥ ५ ॥
रसं नाभावर्द्धोडुपयुतममुं न्यस्य पवनम्
न्यसेन्मन्त्री सान्त्यस्वरमपि शिखायामवहितः ।

---

न्यासो हि ब्रह्मचारी गृही मुमुक्षुरित्यधिकारिभेदात् सृष्टिस्थितिसंहारात्मना त्रिविधः । मध्यमादि कनिष्ठान्तं न्यसेत् प्राहुरिमां स्थितिम् । अङ्गुष्ठान्तं कनिष्ठादि सृष्टिन्यासोऽभिधीयते । अङ्गुष्ठादि कनिष्ठान्तं संहारन्यास ईरितः । नाभ्यादि-केशपादान्तं स्थित्या देहे न्यसेत् सुधीः । केशादिपादपर्य्यन्तं सृष्टिन्यासोऽभिधीयते । पादादि केशपर्य्यन्तं संहारन्यास ईरितः । एवं यथाधिकारं विन्यस्य वक्ष्यमाण-कलान्यासं कुर्य्यात् । तमेवाह भग एकारः तत्परम् ऐकारः माया भुवनेशीबीजं ह्रीं । कुलान्तं कुलविद्यायाः अन्तं सौः इति ।* साम्प्रदायिकास्तु अकुलान्तम् अकुलोऽकारः तस्यान्तं चकार इति वदन्ति । एतद्बीजत्रयं स्वके मूर्ध्नि न्यसेत् । सानन्तं मुखवृत्तके इति संवर्त्तकं चकारः सानन्तम् आकारयुक्तं चगतं के शिरसि गतं बिन्दुरित्यर्थः । तेन चामिति मुखवृत्तके न्यसेत् ॥ ३ ॥

सूक्ष्मादीनिति । सूक्ष्म ईकारः स एव आदिर्येषां ते सूक्ष्मादयः । सार्द्धेन्दून् सबिन्दुकानित्यर्थः । तेन इं ईं उं ऊं इति नयनयोः श्रोत्रयोश्च न्यसेत् । स्वक-पोलयोर्भृगुयुगं सकारयुग्मं प्राणद्वयेनान्वितं ऋ ॠ इत्यनेनान्वितं सृं सॄं इत्यर्द्ध-चन्द्रान्वितं स्वकपोलयोर्न्यसेत् । चिबुके श्वेतद्वयं श्वेतः षकारः गण्डयुग्मं ऌ ॡ शशिकुलं बिन्दुः बिन्दु शिरस्कं तेन छ्ॢं छ्ॣं इति बीजद्वयं चिबुकपार्श्वयोर्न्यसेत् ॥ ४ ॥

दन्तपंक्तियुगले वकद्वयं शकारद्वयम् । इन्दुखण्डोबिन्दुः सबिन्दुकं वदनच्छद-द्वयम् ए ऐ बिन्दुसहितमित्यर्थः ॥ तेन शें शैं इति दन्तपङ्क्त्यो र्न्यसेत् । ओष्ठयो-र्घटयुगं घटो वकारस्तद्द्वयं दन्तयुगम् ओ औ मुखं विसर्जनीयः तत्पूर्वो बिन्दुः सबिन्दुकमित्यर्थः वों वौं इति बीजद्वयं ओष्ठयो र्न्यसेत् ॥ ५ ॥

कलान्यासं कुर्वन्नसुमिह यथोक्तेन विधिना
चिरं जीवत्यङ्गी विगतगदमृत्युः सुखमिह ॥ ६ ॥

पश्चादेषु केवला मातृका वा विन्यस्तव्या रुद्रशक्त्यान्विता वा ।
विद्यान्यासं साधकेन्द्रस्ततोऽङ्गन्यासं चास्य न्यासपूर्वं विदध्यात्
॥ ७ ॥

विद्यान्यासं मूलमन्त्रस्य वर्णैः कुर्य्यान्मन्त्री वक्ष्यमाणक्रमेण ।
आद्यं बीजं मूर्ध्नि गुह्ये द्वितीयं तार्त्तीयं वा विन्यसेत् हृत्प्रदेशे
॥ ८ ॥

सव्यापसव्येक्षणयोर्ललाटे बीजत्रयं श्रोत्रयुगे च वक्त्रे ।
अंसद्वये चापि च पृष्ठवंशे बीजत्रयं कूर्परयोश्च नाभौ ॥ ९ ॥

---

रसं नाभाविति । रसोरेफः अर्द्धेन्दुरूपीविन्दुः तेन रमिति नाभौ न्यसेत् । पवनं यकारः अन्त्यस्वरो विसर्जनीयः । तेन यमिति शिरसि न्यसेत् । अवहितः सावधानः इति षोडशकला न्यसेत् । न्यासफलमाह—असु न्यासं कुर्वन् उक्तविधिना असौ साधकः रोगमृत्युरहितः सुखं यथा स्यात्तथा अध्यात्मतत्त्वेन जीवति ॥ ६ ॥

षोडशकलान्यासानन्तरं मातृकां केवलां रुद्रशक्त्यान्वितां वा यथास्थानं न्यसेत् । रुद्राः श्रीकण्ठादयः शक्तयः पूर्णोदर्य्यादयः । न्यासस्थानानि शारदायाम् । ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः । ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रकेषु च । पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेऽंसके । ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे तथा । जठराननयोर्न्यसेन्मातृकार्णान् यथाक्रमात् । त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रात्मकान् विदुः । यादीन् हादीन् न्यसेदात्मपरमज्ञानपूर्वकान् । प्रयोगस्तु— अं श्रीकण्ठपूर्णोदरीभ्यां नमो ललाटे इत्यादि । ततोऽनन्तरं विद्यान्यासं कुर्य्यात् ॥ ७ ॥

विद्यान्यासप्रकारमाह विद्येति । वक्ष्यमाणप्रकारेण मूलमन्त्राक्षरैर्विद्यान्यासं कुर्य्यात् । प्रथमं बीजं मस्तके द्वितीयं गुह्ये तृतीयं हृदये न्यसेत् । इत्येको न्यासः ॥ ८ ॥

सव्येति । वामदक्षिणनेत्रयोरादा त्र्यं तृतीयं ललाटे अन्त्यः । कर्णयुगे वक्त्रे चैकन्यासः । अंसद्वये पृष्ठे च एको न्यासः । जानुयुगे नाभौ च एको न्यासः ।

बीजत्रयेणैव षडाननानि प्रकल्पयेदूर्ध्वमुखादि विद्वान् ।
अङ्गानि मूलेन च गुह्यनाभिहृदास्यमूर्धस्वपि पञ्च बाणान् ॥१०॥
ललाटदेशे वदने हृदि स्वे नाभौ च गुह्येऽपि च विन्यसेत्तान् ।
त्रैलोक्यसंक्षोभणदृष्टशक्तीन् पञ्चापि कामानपि वक्ष्यमाणान् ॥ ११ ॥

इह कामराजमन्मथकन्दर्पमकरकेतनाश्चापि ।
नामभिरेतैर्गदिता मनोभवेनान्विताः क्रमशः ॥ १२ ॥

कपञ्चमं शुचिनयनान्तसंयुतम्
सवामदृक्पवनगुणान्वितः करः ।
रविस्वरो हरिद्वयविष्णुषष्ठवद्
वलं ततस्त्वर उपरान्वितो भृगुः ॥ १३ ॥

---

ऊर्ध्वाधोदक्षिणवक्त्रे च एको न्यासः । तथा वामापरमध्यवक्त्रेषु एकः । एवं सप्तमूल-विद्यां न्यसेदिति ॥ ९ ॥

बीजत्रयेणेति । मूलमन्त्रबीजैस्त्रिभिर्द्विरुक्तैः षडङ्गानि प्रकल्पयेत् । यदुक्तं त्रिपुरार्णवे—ऊर्ध्वादिं परवक्त्रान्तं विद्यान्यासं समाचरेत् । ऊर्ध्वे पूर्वे तथा याम्ये पृष्ठे दक्षे तथा क्रमादिति । गुह्यनाभीति । गुह्यनाभिहृदयाननमूर्धसु पूर्वोक्त-बाणपञ्चकं न्यसेदिति ॥ १० ॥

कामन्यासमाह ललाटेति । वक्ष्यमाणान् पञ्च कामान् ललाटादिपूक्तस्थानेषु न्यसेत् ॥ ११ ॥

तान् कथयति इहेति । एते पञ्च कामाः नामभिः कथिताः ॥ १२ ॥

एषां बीजानि कथयति कपञ्चममिति । कं जलं तद्बीजं वकारः तत्पञ्चमो हकारः शुचिना अग्निबीजेन रेफेण नयनान्तेन ईकारेण च युक्तं तेन ह्रीमिति भवति । इति प्रथमबीजम् । वामदृक् ईकारः पवनो यकारः तद्गुणाक्षरं तृतीयाक्षरं लकारः करः ककारः । ककारलकारेकारैः कामाख्यं बीजं द्वितीयम् । रविस्वरः द्वादशस्वरः ऐकारः तृतीयं बीजम् । हरिद्वयी सकारः विष्णुः रकारः ततः षष्ठस्वर ऊकारः । वलं वकारः वकारसकारौकारैश्चतुर्थम् । एतावता

तेषां शिरःसु विदधीत बुधोऽर्द्धचन्द्रा-
मेवं मया निगदिताः खलु पञ्च कामाः।
पुंसः स्मरानुदिनं जपतः खदिहे
लोकत्रयं भवति तस्य मनोऽनुवृत्तिः॥ १४ ॥

अथ त्रिलोकार्चितशासनाया वक्ष्यामि बीजत्रयमम्बिकायाः।
मोक्षव्यमेतत् कुलधर्मविद्भिरामुष्टिकैर्निजसिद्धये च ॥ १५ ॥

कान्तादिभूतपदगं कगतार्द्धचन्द्रम्
दन्तान्तपूर्वजलधिस्थितवर्णयुक्तम्।
एतज्जपन्नरवरो भुवि वागभवाख्यम्
वाचां सुधारसमुचां लभते स सिद्धिम्॥ १६ ॥

कान्तान्तं कुलपूर्वपञ्चमयुतं नेत्रान्तदन्तान्वितम्
कामाख्यं गदितं जपन्मनुवरं साक्षाज्जगत्क्षोभकृत्।

---

। मिति। तर इति स्वरूपं उपरः ईकारः भृगुः सकारः सकारतकाररेफेकारैः
ाद्यमं तेन स्त्रीमिति॥ १३ ॥

तेषां शिरःसु विदधीत बुधोऽर्द्धचन्द्रामिति। एतानि बीजानि प्रत्येकं बिन्दुभिः
ामराजमन्मथकन्दर्पमकरकेतनमनोभवनामभिः संयोज्य न्यसेदित्यर्थः॥ १४। १५॥

कान्तादिभूतपदगमिति। आकारोऽनुस्वारः स एवान्तो यस्यौकारस्य तस्यादि-
ृतपदगम् आदिचतुर्दशपदगम् ऐकारः यद्वा कान्तो विसर्गस्तस्यादिभूतपदगम् आदौ
स्थितं यत् स्वरूपसकारः तमुद्धरेत्। कगतार्द्धचन्द्रं के मस्तके गतोऽर्द्धचन्द्रो यस्य
ादृशं शिरोगतानुस्वारमित्यर्थः। दन्त ओकारः तदन्त औकारः तत्पूर्वजलधिस्थित-
र्णयुक्तं तत्प्रातिलोम्येन चतुर्थमक्षरं एकारः कगतार्द्धचन्द्रं सबिन्दुकमित्यर्थः। एतैः
मिलितायां तस्यां सत्यां ऐं इति वाग्भवाख्यो मन्त्राणाम् मन्त्र उद्धृतः। एतद्वाग्भवनामकं
जं जपन् अशेषाभ्युतमयीं वाक्सिद्धिं लभते। गद्यापद्या शिवानी भव्याद्भवतीति
भवमिति प्रथमं मूलमन्त्रबीजम्॥ १६॥

द्वितीयं बीजमुद्धरति कान्तान्तमिति। के मस्तके न्यस्यत इति कं बिन्दुः तस्यान्तो
उर्जनीयः षः इति तदन्तः ककारः। कुलं सकारः तत्पूर्वप्रथमं तत्प्रातिलोम्येन
ामी लकारः। तदन्त ईकारः दन्तो बिन्दुः ककारलकारेकारैश्च एतवता क्लीमिति

दन्तान्तेन युतं सदन्ति सकलं सम्मोहनाख्यं कुलम्
सिध्यत्यस्य गुणाष्टकं खचरता सिद्धिश्च नित्यं जपेत् ॥ १७ ॥

ऋषिर्दक्षिणामूर्त्तिसंज्ञो महात्मा
भवेच्छन्द एतस्य मन्त्रस्य पङ्क्तिः।
सरस्वत्यचिन्त्यप्रभावा प्रदिष्टा
बुधै र्देवता देववृन्दार्चिताङ्घ्रिः ॥१८॥
अमुष्य मन्त्रस्य रदान्तयुक्तजम्
बीजं सदन्तं नकुलीशपूर्वम्।
शक्तिस्तु साखण्डलकर्णपूर्वम्
सषष्ठजैवातृकमाननान्तम् ॥ १९ ॥

वर्णः शुक्लो मुनिभिस्त्रिभुवनसहितस्य मन्त्रराजस्य।
आगमपारगमतिभिर्गान्धारोऽस्य स्वरो गदितः ॥ २० ॥

विद्यामूलोत्पत्तिरेषा मयोक्ता ज्ञातव्येयं सर्वथा सिद्धिकामैः।
देव्या शप्ता येन विद्येयमाद्या पूर्वं तेन प्राणहीनाऽभवत् सा ॥२१

---

कामराजाख्यबीजं गदितं उक्तम्। अयं मन्त्री जपादेव जगत्क्षोभकृत् भवति। तृतीयं बीजमुद्धरति। दन्तान्तेति दन्तानामन्त्यपङ्क्तौ न्यस्यत इति दन्तान्त औकारः तेन युतं कुलं सकारमुद्धरेत्। कीदृशं सदन्ति सानुस्वारं सकलं विसर्गसहितम् अस्य बीजत्रयजपादणिमादिसिद्धिर्भवति खेचरीसिद्धिश्च भवति। अणिमा लघिमा गरिमा प्राकाम्यं वशितेशिता। प्राप्तिः कामावसायित्वं शम्भोरैश्वर्यमष्टधा। एतद्बीजत्रयात्मकः त्रिपुरामन्त्रः ऋष्यादिः श्लोकः सुगमः ॥ १७ ॥ १८ ॥

अस्य मन्त्रस्य बीजशक्ती आह अमुष्येति। रद औकारस्तस्यान्त औकारः नकुलीशो हकारः तत्पूर्वं सकारः दन्तोबिन्दुः एतेन सौं इति बीजं विद्यादित्यध्याहार्यम्। शक्तिस्तु आखण्डलेन कर्णपूर्वेण ईकारेण षष्ठजैवातृकेण अर्द्धचन्द्रेण च सहितम् आननान्तं ककारं जानीयात्। तथाचास्य मन्त्रस्य सौं बीजं क्लीं शक्तिः शुक्लो वर्णः गान्धारः स्वर इति ॥ १९। २० ॥

विद्येति। विद्याया मूलोत्पत्तिरेषा मयोक्ता इयमुत्पत्तिर्विद्यासिद्धिलिप्सुभिर्ज्ञातव्या। देव्येति इयं विद्या देव्या शप्ता तेन प्राणशून्याऽभवत् ॥ २१ ॥

शिवशक्तिबीजमत एव शम्भुना
निहितं तयोरुपरि पूर्वबीजयोः।
अकुलं कुलोपरि च मध्यमाधरे
दहनं ततः प्रभृति सोर्जिताऽभवत् ॥ २१ ॥
भैरवीयमुदिता कुलपूर्वा देशिकोऽथ यदि भवेत् कुलपूर्वा।
सैव शीघ्रफलदा भुवि विद्येत्युच्यते पशुजनेष्वतिगोप्या ॥ २२ ॥
शिवाष्टमं केवलमादिबीजं भगस्य पूर्वाष्टमबीजमन्यत्।
परं शिरोऽन्तं गदिता त्रिवर्णा सङ्केतविद्या गुरुवक्त्रगम्या ॥ २४॥
कान्तान्तवान्ताकुलवामनेत्रान्वितं तथा दन्तिकुलं सनादम्।
षट्कूटमेतत्त्रिपुरार्णबीजमत्यन्तगुह्यं स्मर एव साक्षात् ॥ २५ ॥

---

शिवेति। यत इयं विद्या भवान्या प्रशा चतएव हेतोः तयोराद्यबीजयोरुपरि शिवशक्तिबीजं हस इति बीजं निहितम्। उक्तं हि सङ्केतः परमा शक्तिः विकाशः परमः शिवः। सङ्केतश्च विकाशश्च हसमित्यक्षरद्वयमिति ॥ पश्चात्तन्बीजस्योपरि अकुलं हकारो निहितः। मध्यबीजस्याधरे अकुलं हकारो निहितः। मध्यबीजस्याधरेऽधः रेफो निहितः। तदवधि सा विद्या तेजोवती जाता ॥ २२ ॥

भैरवीयमिति। इयं बाला विद्या अकुलपूर्वा हकारपूर्वा सती भैरवी उक्ता सैव भैरवी यदि कुलपूर्वा सकारपूर्वा भवति तदा विद्येत्युच्यते। पशुजनेषु अल्पज्ञेषु अप्रकाश्या यथा पशुजनेषु अदीक्षितेषु। तथाच एतन्मन्त्रस्य भेदत्रयं भवति वाग्भवाद्यम्। बाला अकुलपूर्वा सती भैरवी कुलपूर्वा सती विद्येति ॥ २३ ॥

बीजत्रयीप्रकथितं स्वतन्त्रधाह शिवाष्टममिति। शिव ककारस्तस्याष्टम ऐकारः भग एकारः तत्पूर्वाष्टमं ईकारः परं तृतीयम्। शिरोबिन्दुः तदन्तो यस्य स औकारः स तृतीयबीजोपलक्षकः इयं त्र्यक्षरी। सङ्केतविद्या कथिता गुरुपदेशैः परं बुध्यते ॥ २४ ॥

बीजान्तरमाह कान्तान्तेति। कं बिन्दुस्तस्यान्तो विसर्जनीयः तदन्तः कः कान्तः वकारोऽन्तो यस्य स लकारः अकुलो हकारः सकारोऽन्तो यस्य स रेफः वामनेत्रम् ईकारः दन्तीबिन्दुः कुलं सकारः नादयुक्तं सनादम् एतत्त्रिपुरातन्त्रबीजं षट्कूटं षट्कूटं त्रिवर्णबीजम् अतिशयेन गोप्यम् अयं मन्त्रः साक्षात् स्मर एव ॥ २५ ॥

दन्तान्तेन युतं सदन्ति सकलं सम्मोहनाख्यं कुलम्
सिध्यत्यस्य गुणाष्टकं खरतता सिद्धिश्च नित्यं भवेत्॥ १७॥
ऋषिर्दक्षिणामूर्त्तिसंज्ञो महात्मा
भवेच्छन्द एतस्य मन्त्रस्य पङ्क्तिः।
सरस्वत्यचिन्त्यप्रभावा प्रदिष्टा
बुधै र्देवता देववृन्दार्चिताङ्घ्रिः॥१८॥
अमुष्य मन्त्रस्य रदान्तयुक्तजम्
वीजं सदन्तं नकुलीशपूर्वम्।
शक्तिस्तु साखण्डलकर्णपूर्वम्
सहार्द्धजैवातृकमाननान्तम्॥ १९॥
वर्णः शुक्लो मुनिभिस्त्रिभुवनसहितस्य मन्त्रराजस्य।
आगमपारगमतिभिर्गान्धारोऽस्य स्वरो गदितः॥ २०॥
विद्यामूलोत्पत्तिरेषा मयोक्ता ज्ञातव्येयं सर्वथा सिद्धिकामैः।
देव्या शप्ता येन विद्येयमाद्या पूर्वं तेन प्राणहीनाऽभवत् सा॥२१

---

कामराजाख्यवीजं गदितं उक्तम्। अयं मन्त्री जपादेव जगत्क्षोभकृत् भवति। तृतीयं वीजमुद्धरति। दन्तान्तेति दन्तानामन्त्यपङ्क्तौ अवसन इति दन्तान्त औकारः तेन युतं कुलं सकारमुद्धरेत्। कीदृशं सदन्ति सानुस्वारं सकलं विसर्गसहितम् अस्य वीजत्रयजपादणिमादिसिद्धिर्भवति खेचरीसिद्धिश्च भवति। अणिमा लघिमा गरिमा प्राकाम्यं वशितेशिता। प्राप्तिः कामावसायित्वं अष्टौ ऐश्वर्य्यमष्टधा। एतद्वीजत्रयात्मकः त्रिपुरामन्त्रः ऋष्यादिः श्लोकः सुगमः॥ १७॥ १८॥

अस्य मन्त्रस्य वीजशक्ती आह अमुष्येति। रद औकारस्तस्यान्त औकारः नकुलीशो हकारः तत्पूर्वं सकारः दन्तोविन्दुः एतेन सौं इति वीजं विद्यादित्वध्याहार्य्यम्। शक्तिस्तु आखण्डलेन कर्णपूर्वेण ईकारेण अर्द्धजैवातृकेण अर्द्धचन्द्रेण च सहितम् आननान्तं ककारं आनीयात्। तथाचास्य मन्त्रस्य सौं वीजं क्लीं शक्तिः शुक्लो वर्णः गान्धारः स्वर इति॥ १९। २०॥

विद्येति। विद्याया मूलोत्पत्तिरेषा मयोक्ता इयमुत्पत्तिर्विद्यासिद्धिलिप्सुभिर्ज्ञातव्या। देव्येति इयं विद्या देव्या शप्ता तेन प्राणशून्याऽभवत्॥ २१॥

शिवशक्तिबीजमत एव शम्भुना
निहितं तयोरुपरि पूर्वबीजयोः।
अकुलं कुलोपरि च मध्यमाधरे
दहनं ततः प्रभृति सोर्जिताऽभवत् ॥ २२ ॥

भैरवीयमुदिता कुलपूर्वा देशिकैर्यदि भवेत् कुलपूर्वा।
सैव शीघ्रफलदा भुवि विद्येत्युच्यते पशुजनेष्वतिगोप्या ॥ २३ ॥

शिवाष्टमं केवलमादिबीजं भगस्य पूर्वाष्टमबीजमन्यत्।
परं शिरोऽन्तं गदिता त्रिवर्णा सङ्केतविद्या गुरुवक्त्रगम्या ॥ २४ ॥

कान्तान्तवान्ताकुलवामनेत्रान्वितं तथा दन्तिकुलं सनादम्।
षट्कूटमेतत्त्रिपुरार्णवोक्तमत्यन्तगुह्यं स्मर एव साक्षात् ॥ २५ ॥

---

शिवेति। यत इयं विद्या भवान्या प्रोक्ता अतएव हेतोः तयोराद्यबीजयोरुपरि शिवशक्तिबीजं हस इति बीजं निहितम्। उक्तं हि सङ्कोचः परमा शक्तिः विकाशः परमः शिवः। सङ्कोचश्च विकाशश्च हसमित्यक्षरद्वयमिति॥ परस्यान्तबीजस्योपरि अकुलं हकारो निहितः। मध्यबीजस्याधरे अकुलं हकारो निहितः। मध्यबीजस्याधरेऽधः रेफो निहितः। तदवधि सा विद्या तेजोवती जाता ॥ २२ ॥

भैरवीयमिति। इयं बाला विद्या अकुलपूर्वा हकारपूर्वा सती भैरवी उक्ता सैव भैरवी यदि कुलपूर्वा सकारपूर्वा भवति तदा विद्येत्युच्यते। पशुजनेषु अल्पज्ञेषु अप्रकाश्या यथा पशुजनेषु अदीक्षितेषु। तथाच एतन्मन्त्रस्य भेदत्रयं भवति वाग्भवाद्यम्। बाला अकुलपूर्वा सती भैरवी कुलपूर्वा सती विद्येति ॥ २३ ॥

बीजत्रयोपलक्षितं स्वतन्त्रमाह शिवाष्टममिति। शिव अकारस्तस्याष्टम ऐकारः भग एकारः तत्पूर्वाष्टमं ईकारः परं तृतीयम्। शिरोबिन्दुः तदन्तो यस्य स औकारः स तृतीयबीजोपलक्षकः इयं त्र्यक्षरी। सङ्केतविद्या कथिता गुरूपदेशैः परं बुध्यते ॥ २४ ॥

बीजान्तरमाह कान्तान्तेति। कं बिन्दुस्तस्यान्तो विसर्जनीयः तदन्तः कः कान्तः ककारोऽन्तो यस्य स लकारः अकुलो हकारः सकारोऽन्तो यस्य स रेफः वामनेत्रम् ईकारः दन्तीबिन्दुः कुलं सकारः सानुस्वारं सनादम् एतत्त्रिपुरार्णवोक्तं षट्कूटं कूटद्वयबीजम् अतिशयेन गोप्यम् अयं मन्त्रः साक्षात् स्मर एव ॥ २५ ॥

आद्यं बीजं मध्यमे मध्यमादावन्त्यं चान्ते योजयित्वा जपेद्यः।
त्रैलोक्यान्तःपातिनो भूतसङ्घा वश्यास्तस्यैश्वर्यभागी भवेयुः॥२६॥

आद्यं कृत्वा चावसानेऽन्त्यबीजम्
मध्ये मध्यं चादिमे साधकेन्द्रः।
कुर्यान्नित्यं यो जपेन्मन्त्रमेनम्
जीवन्मुक्तः सोऽश्नुते दिव्यसिद्धिम्॥२७॥

मन्त्रराजममुं समस्तजगद्विमोहनकारकम्
मातृकान्तरितं जपेदनुलोमतोऽपि विलोमतः।
हंसदेवसमन्वितं सकलं बुधः पर एव वा
सोऽपि दिव्यगुणान्वितो लभते सुसिद्धिमनुत्तमाम्॥२८॥

---

अथ क्रमव्यत्ययभेदेन प्रकारान्तरमाह आद्यमिति। आदिमं बीजं मध्यबीजस्थाने मध्यबीजमादिबीजस्थाने अन्त्यं स्वस्थाने एवं योजयित्वा य एनं मन्त्रं जपेत्। तस्य त्रैलोक्यवर्तिनः प्राणिनः वश्या भवन्ति ऐश्वर्यञ्च भवति इत्येकः प्रकारः॥२६॥

अपरमाह आद्यमिति। आद्यं बीजं अन्त्ये अन्तिमञ्च मध्ये मध्यमञ्चाद्ये कृत्वा प्रत्यहं य एनं मन्त्रं जपति स जीवन्नेव मुक्तो भवति दिव्यानाञ्च या सिद्धिस्तां लभते॥२७॥

मन्त्रराजमिति। य एनं मन्त्रश्रेष्ठम् अनुक्रमेण व्युत्क्रमेण च मातृकान्तरितं कृत्वा जपति स दिव्यगुणभाक् स तु अतुलां सिद्धिमाप्नोति। तत्र क्रमः मन्त्रमुच्चार्य्य अन्ते अकारमुच्चरेत् पुनरपि मन्त्रमुच्चार्य्य आकारमुच्चरेत् एवं लकारपर्य्यन्तमभ्यस्य। मन्त्रान्तरितं जपं कृत्वा पुनर्मन्त्ररहितं केवलं लकारमेव स्थानीयमुच्चार्य्य पुनः प्रतिलोमक्रमेण लकारादिं अकारपर्य्यन्तं प्रत्येकं मन्त्रान्तरितं जपेत्। एवं मातृकाक्षरमालया जपं कुर्वतामेकवारेण जपः शतसंख्यापरिमितो भवतीत्यर्थः। शारदातिलके राघवभट्टेन एवं व्याख्यातम्। अकारादिक्षकारान्तां मातृकां पठित्वा अन्ते मन्त्रं पठेत्। ओं नमः वर्णोऽयं ततः क्षकाराद्यकारान्तां मातृकां पठेत्। ततोऽतुलां सिद्धिं लभते। एतत्तु प्रकारान्तरम्। हंसदेवमित्यादि मूलमन्त्र-

व्यञ्जनहंसयमन्वितमेतद्व्यञ्जनकुञ्जगतो लिखितस्य ।
यो जपति स्थिरनिर्मलचित्तः शीघ्रमुपैति नरः स तु सिद्धिम् ॥२९॥
कमलं परिलुप्तमध्यमाव्यस्वरमौश्चादियुतं सविन्दुनादम् ।
निगमादिनमोऽन्तरे विराजदपि देवी हृदयं प्रसिद्धमेतत् ॥३०॥

विद्या कामदुघा त्रिलोकविनुता स्वर्गापवर्गप्रदा
गुह्याद्गुह्यतरा महोदयकरी या योगिनीनामिह ।
सा सारस्वतजन्मभूर्निगदिता सौभाग्यसम्पत्करी
सद्यः प्रत्ययकारिणी सकृदपि प्रोच्चारिता भूतले ॥३१॥
यतः स्वप्नावस्थामियमुपगता विश्वविनुतां
ततः सिद्धिं नैव प्रवितरति जप्तापि सततम् ।
प्रबुद्धा चेद्विद्या फलति सहसा दीपनकरीम्
ततो विद्यां वक्ष्याम्यहमिह रहस्यामतितराम् ॥ ३२ ॥

---

बीजत्रयं यकारसकाराभ्यां संयोज्य जपेत् । पर एवेति । श्रीमूलविद्यायाः प्रथम-मध्यमे बीजे केवले उच्चार्य अन्तिमं बीजं हकारसकाराभ्यां संयोज्य जपेदित्यर्थः ॥२८॥

व्यञ्जनहंसेति । हकारसकारयोरन्तर्गताकारानुस्वारान्तिमविसर्जनीयमपि लोपयित्वा केवलव्यञ्जनमात्रमेव विद्यया संयोज्य जपेत् सोऽप्युत्तमां सिद्धिं प्राप्नोति तदुक्तं प्रत्यक्षरार्धं हंसेन ग्रथयित्वा जपेत् सुधीरिति ॥ २९ ॥

कमलमिति । कमलस्वरूपमीषोडरेत् कीदृशं परिलुप्तो मध्यमोऽन्त्यस्वरश्च यत्र तादृशं मकारान्त्यस्वरशून्यं क एवंरूपः । ईश्वः श्रिय उकारस्यादिरौकारः सविन्दु-नादं तदुक्तं तेन ककारलकारैकारविन्दुनादैः क्लीमिति कामाख्यबीजम् । निगमादिः प्रणवः । नम इति स्वरूपपदद्वयं प्रणवनमसोर्मध्ये कामबीजे लिखिते चतुरक्षरात्मिका देवी हृदयाख्या विद्या स्यात् । मातृकार्णवमुक्ता भैरवीं स्तौति ॥ ३० ॥

विद्येति । सा विद्या इह भूतले च या विद्या योगिनीनां महोदयकारी तत्त्व-ज्ञानजनिका कामदुघा ईप्सितार्थप्रदायिनी अतिलोभ्या । वारैकमपि जप्ता सती प्रत्ययकारिणीति ॥ ३१ ॥

यत इति । यतो हेतोः स्वप्नावस्थां गता इयं विद्या जप्ता वारं वारमपि जप्ता सिद्धिं

पुष्पं वारिमुचां दवादिरपरस्तावेव वर्णौ ततो
दीर्घं वारिसखान्तमप्यधि तथा वाम्बी सलोकाक्षरी ।
विद्या वाग्भवबीजदीपनकरी सारस्वतोत्पत्तये
साक्षात्काङ्क्षितपारिजातलतिका वस्वक्षरोक्ता मया ॥२३॥
शक्रा शक्रदृगन्वितः सहभगा मेषान्विता नादिनी
कान्तान्तं सभगं सपूषणमतो धान्तं त्रिमेषः सहक् ।
कालोऽनन्तयुतं वियत् सदमनः संवर्त्तको भीषणा
साङ्कूरा कमलासनः सहशिवो वैश्वानरस्तादृशः ॥२४॥

---

न ददाति प्रबुद्धा यदि भवति तदा हठात् फलं ददाति अतो हेतोर्दीपनीं विद्यामस्या अहं कथयामि रहस्यां गोप्याम्। गोपनीये रहः स्मृतम् ॥ २२ ॥

तत्राद्यबीजदीपनमाह पुष्पमिति। मेघानां पुष्पं जलं तद्बीजं वकारः तमुच्चरेत्। अपरो रवर्णः दवादिर्दवशब्दस्यादिभूतो दकारः पुनस्तावेव वर्णौ रकारदकारौ तदनन्तरं दीर्घम् आकारसहितं वारि जलबीजं सखा तस्यान्तेन गकारेण वर्त्तत इति सखान्तः अकारस्तमुच्चरेत्। अधु वकारः तथा दीर्घस्तेन वाग्वा इति भवति लोकस्वरयुतो वान्तो धोऽन्ते यस्य स दकारः धस्यान्तो नकारः दकारनकारौ लोकशब्देन त्रिसंख्योपलक्षितः तत्संख्यक इकारः तेन युतौ एतावता वद वद वाग्वादिनि इति भवति। इयमष्टाक्षरी विद्या वाग्भवोपलक्षितबीजसन्दीपनजनिका सारस्वतधर्मोत्पत्तये आकाङ्क्षितार्थे कल्पलतेव ॥ २३ ॥

द्वितीयबीजदीपनमन्त्रमाह शक्रेति। शक्रा ककारः शक्रेण दृशा च युक्तः शक्रः इन्द्रः तद्बीजं लकारः दृशि चक्षुषि न्यस्यत इति दृक् इकारः प्रथमोपात्तत्वात् ह्रस्वपरिग्रहः। नादिनी नकारः भगेन एकारेण मेषेण लकारेण चान्विता उच्चार्या कान्तान्तः खः सोऽन्ते यस्य स कः सभगम् एकारसहितं सपूषणं सलकारम् अनन्तरं धान्तं दकारम् उच्चरेत्। त्रिरूपो मेषो लकारः सहक् इकारसहितः। कालो मकारं समुच्चरेत्। अनन्तेन आकारेण युतं वियत् हकारमुच्चरेत्। सदमनः औकारसहितः संवर्त्तकः क्षकारः उच्चार्यः। भीषणा भकारः साङ्कूरा सानुस्वारा कमलासनः ककारः उकारसहितः वैश्वानरो रेफः तादृश उकारसहित उच्चार्यः। एतावता क्लिन्ने क्लेदिनि महाक्षोभं कुरु इति भवति ॥ २४ ॥

एकादशाक्षरीयं मन्मथबीजप्रबोधनकरी स्यात्।
क्षोभयति नाकभूतलपातालवासिनः सहसा ॥ ३५ ॥

सावित्री वदनयुता महादिकाली
व्योमान्तं शशधरखण्डमण्डितान्तम्।
मोहिन्या सरसिजभूयुतस्तथाग्नि-
र्विद्येयं परबीजदीपनी सा ॥ ३६ ॥

या यस्य दीपनकरी गदितेह विद्या
बीजस्य तस्य पुर एव समुच्चरेत्ताम्।
विद्याषडङ्गवदनेषु यथावदेव
न्यासेषु साधकवरो विदधीत शश्वत् ॥ ३७ ॥

विद्याङ्गमेवं न्यसतः स्वदेहे त्रैलोक्यमेतद्वशमेति पुंसः।
पापानि सद्यः प्रशमं प्रयान्ति त्रस्यन्ति रक्षांसि सपन्नगानि ॥३८

मन्त्ररूपमिदमीरितं मया सर्वथा गुरुमुखेन लभ्यते।
गुर्वनुग्रहकृते महीतले मन्त्र एष न हि सिद्धिदायकः ॥३९॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
द्वितीयः पटलः।

---

इयम् एकादशवर्णात्मिका विद्या मन्मथबीजस्य मध्यबीजस्य दीपिका भवेत् ॥३५॥

तृतीयबीजदीपनमाह सावित्रीति। सावित्रीपदेन ओकारो लक्षितः महा-दिकाली महाकालीत्यर्थः। तदाद्यवर्णो मकारो लक्षितः वदन ओकारस्तेन युतः व्योम हकारः तदन्तं सानुस्वारम् उद्धरेत् मोहिन्या उकारेण सरसिजभूर्ब्रह्मा ककार उद्धर्त्तव्यः। ततो मोहिनी ततोऽग्निः रेफः एतावता ओं महानीचं कुरु इति सप्ताक्षरी परमबीजदीपनी उक्ता ॥ ३६ ॥

तेन प्रकारेण दीपनयोग इत्याह या यस्येति। या विद्या यस्य बीजस्य दीपन-करी उक्ता तद्बीजस्य पुरतः प्रथमं तां विद्यामुच्चरेत् ॥ ३७ ॥

न्यासेषु दीपनीयोगमाह विद्येति। विद्यान्यासषडङ्गन्यासवदनन्यासेषु बीज-मीयेति। एवं कृते विद्या प्रबुद्धा भवति। एवं प्रकारेण मूलविद्या मन्त्राङ्गं स्वशरीरे न्यसतः पुंसः लोकत्रयं वशमेति पापानि नश्यन्ति सद्यः सह ॥ ३८ ॥

## तृतीयः पटलः ।

अथेदं शरीरं स्वकीयाङ्गुलीभि-
र्बुधैः षण्णवत्यङ्गुलायाममुक्तम् ।
दिनेशाङ्गुलीभिः शरीरात् समीरो-
ऽधिकः प्राणसंज्ञो मतो योगविद्भिः ॥ १ ॥

इह प्राणवायुं सदाभ्यासतो यो नरो न्यूनभावं नयत्यैनमङ्गात् ।
समत्वं शरीरेण वा भूतलेऽस्मिन् स पूज्यो बुधैरुत्तमो योगवित्स
॥ २ ॥

चतुर्दशास्तापघने प्रधाना नाड्यः स्मृतास्तास्वपि तिस्र एव ।
इड़ा सुषुम्नापि च पिङ्गलाख्या मुख्या सुषुम्नैव च तासु नाड़ी
॥ ३ ॥

---

इदं मायामन्त्रस्वरूपं कथितं गुरुणा वा यदि लभ्यते तदा परं सिध्यति अन्यथ गुरुप्रसादमन्तरेण एष मन्त्रो न सिध्यतीति ॥ ३९ ॥

इति त्रिपुरासारसमुच्चयटीकायां द्वितीयः पटलः ।

---

एवं साधकानां सकलपुरुषार्थसारभूतं मन्त्रस्वरूपमुक्त्वा पुरुषार्थान्तराय परि हाराय योगाङ्गभूतप्राणायामप्रकारान् तद्विशेषांश्च वक्तुमुपक्रमते अथेदं शरीरमि त्यादिना । इदं शरीरं पण्डितैः षड्धिकनवत्यङ्गुलदैर्घ्यं म् उक्तं यस्य शरीरस्य परि माणं तस्यैवाङ्गुलिमानेन । प्राणसंज्ञको वायुः शरीरान्निर्गमस्थानाद्द्वादशाङ्गुलीभि रधिको मतः द्वादशाङ्गुलपर्यन्तं सञ्चरति ॥ १ ॥

इहेति । इह भुवि यो नरः सदाभ्यासतः सदाभ्यासेन एनं प्राणवायुं शरीरा न्न्यूनभावं सकलाङ्गव्यापकत्वं नयति । शरीरेण समानत्वं तौल्यं वा आसमाङ्ग व्यापकत्वं वा करोति स योगवतां मध्येऽस्मिन् भूतले पूज्यते इति ॥ २ ॥

प्राणाश्रयभूता नाड़ी दर्शयति चतुर्दशेति । तदुक्तं नाड़ीनामाश्रयः पिण्डो नाड्यः प्राणस्य चाश्रय इति । अस्मिन् शरीरे चतुर्दश नाड्यः प्रधानीभूताः सन्ति तासु चतुर्दशसु मध्ये तिस्रः प्रधानाः स्मृताः ॥ ३ ॥

इड़ा नाम नाड़ी स्थिता वामभागे
तयोर्दक्षिणे पिङ्गला नाम नाड़ी ।
तयोः पृष्ठवंशं समाश्रित्य मध्ये
सुषुम्ना स्थिता ब्रह्मरन्ध्रन्तु यावत् ॥ ४ ॥
सुषुम्नान्तराले स्थिता चित्रनाड़ी
युता पञ्चवर्णोज्ज्वला पञ्चदेवैः ।
तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मम
मृणालान्तरालोल्लसत्तन्तुतुल्यम् ॥ ५ ॥

---

तासां तिसृणां नामानि कथयति। इड़ेति। इड़ा पिङ्गला सुषुम्ना चेति तास्वपि तिसृषु मध्ये सुषुम्नैव प्रधानीभूता। चतुर्दशनाड़ीनां नामानि यथा। इड़ा च पिङ्गला चैव सुषुम्ना च सरस्वती। गान्धारी हस्तिजिह्वा च सुपूषा च यशस्विनी॥ अलम्बुषा कुहूश्चैव शङ्खिनी चित्रिणी तथा। विश्वोदरी विश्वमुखी व्याप्ता नाड़ी ता चतुर्दश॥ एतास्वपि तिस्रो मुख्याः यास्वपि योगः प्रतिष्ठितः तास्वपि सुषुम्नैव मुख्या सा च द्वादशान्तं पृष्ठवंशं समाश्रित्य सकलाधारत्वेनाधोमुखी चक्रभूता तिष्ठति। आधारो नाम पद्मस्थानात् द्व्यङ्गुलादूर्द्धं मेढ्राद्द्व्यङ्गुलादधोभागे चतुरङ्गुलायामविस्तारं अङ्गुलोन्नतं त्वगादिधातुभिर्वेष्टितं चतुर्दलात्मकं पाक्षराकारं पद्मं तत्कर्णिकामध्ये त्रिकोणा योनिः तन्मध्ये सकलप्रपञ्चनिमित्तोपादानभूता कुण्डलाख्या चिन्मयी शक्तिः त्रिगुणितादिरूपेण सूर्य्येन्दुवैश्वानराणां मूलभूता भवति या त्रिकोणमुत्थिता सुषुम्ना नाम नाड़ी वीणादण्डाख्यपृष्ठवंशस्य पुरोभागमवलम्ब्य ब्रह्मरन्ध्रपर्य्यन्तम् ऊर्द्धाकारा तिष्ठति। तथाच तन्त्रचूड़ामणिः। मेरुदण्डे बहिः पार्श्वे चन्द्रसूर्य्यौ तिमस्तके। त्रिधा मध्ये—सुषुम्ना सन्निविष्टा च तन्मध्ये चित्ररूपिणी। तत्रैव ग्रथितं पद्मं मूलादिपद्मपञ्चकम्। कालिकाकाररूपेण डाकिन्याद्यावलम्बितम्। मूलधारं समाच्छाद्य स्थिता नागस्वरूपिणी। वायुना भिद्यते सूक्ष्मं दृढं चिरा नयेत्ततः। तच्छासोज्ज्वलकामस्य शिखयाऽतिसमुज्ज्वला। प्रतिचक्रप्रबुद्धा सा जीवात्मानं परे कुले। नियोजयति तद्योगादमृतं चरते चिरम्। जीवः शोषित नासाग्रे गतौ चन्द्रदिवाकरौ। चक्रीकृत्य महापद्मं जीवीकृत्य सुषुम्नया। व्याप्नुत्य नासिकामध्यं गतं चित्रा तु सङ्गता। ऊर्द्धं भित्त्वा तु चित्रं

**ब्रह्मसूत्रमिदमेव देहिनां जीवभूतममृतैककारणम्।**
**यद्वदन्ति मुनयः पुरातना दिव्यमार्ग इति भव्यचेतसः॥ ६॥**

---

वे इतरान् पुष्करान् ततः। वह्निकल्पमनाकाङ्क्षाकाङ्क्षिणी मोक्षदायिनी। जीवना-दृष्टसम्बद्धा स्थिरा परमसन्निधौ। एतद्दृढं विजानाति भित्त्वा याति परं पदम्। इत्यादि बहुशः। योगार्णवेऽपि। सुरज्ञाष्टपार्श्वेन तेनैव संव्यतः क्रमात्। सूर्याचन्द्रमसौ नाड्यौ गते नासाद्वयावधि। तन्मध्ये द्वितीयं भित्त्वा सुषुम्ना पद्मकोटरे। ब्रह्मरन्ध्रावधिर्याता भित्त्वा व्योम सुराश्रयम्। सुखेनाच्छाद्य तद्द्वारं कुण्डलीशक्तिरुज्ज्वला। निद्रावशगता देवी ग्रसुप्तभुजगोपमा। तन्निकोणस्य वामदक्षिणकोणयोः सम्भूते सुषुम्नाया वामदक्षिणभागे इडापिङ्गले स्थिते। तयोर्मध्ये इडा नाम नाडी चापाकृतिर्भूत्वा लिङ्गमूलस्थाने सुषुम्नामाश्रित्य दक्षिणभागं गता तदाकारा पुनरपि नाभिस्थाने वामभागं गता। तदा पुनरपि हृदयस्थानमाश्रित्य दक्षिणभागं गता। तदा करौ पुनरपि जानुमूलमाश्रित्य वामनासापुटं गच्छति। एवं दक्षिणभागसम्भूता पिङ्गला सुषुम्नामाश्रित्य दक्षिणनासाविवरं गच्छति। सुषुम्नामूलपुरीभागादुत्थिता आजिह्वान्तं सरस्वती नाम नाडी स्थिता। केचित्तु त्रयं वर्णयन्ति। एताः सुषुम्नाश्रितास्तु यासु योगः प्रतिष्ठितः। ताश्च नासापुटद्वयब्रह्मरन्ध्रविनिर्गताः। सरस्वत्यादिचत्वारो मुखरन्ध्रविनिर्गताः। तासु का शब्दजननी अन्या स्वरसवाहिनी। अपरा रसनाधारा परा तोयवहा शिवा। अन्याः षट्नेत्रकर्णाङ्गमेदोद्वारविनिर्गताः। शङ्खिनी नाभिसम्बन्धा या नातु हृदि बध्यते। यया गर्भगतः पिण्डः पुष्यतेऽन्नरसादिभिः। एताभ्य एव नाडीभ्यः शाखोपशाखप्रकारेण सार्द्धलक्षत्रयसंख्यानां नाडीनां सम्भवः। कुत्र का नाडी तिष्ठति इति शिष्याकाङ्क्षायामाह इडेति शरीरस्य वामांशमाश्रित्य इडा नाम नाडी दक्षिणभागे पिङ्गला तयोर्नाड्योर्मध्ये देहस्य पृष्ठवंशमाश्रित्य ब्रह्मरन्ध्रपर्यन्तं सुषुम्ना अवस्थितेति। सुषुम्नायाः अभ्यन्तरे चित्रा नाडी स्थिता पञ्चभिर्वर्णैः श्वेतरक्तादिभिरुज्ज्वला पञ्चभिर्देवैर्ब्रह्मविष्णुरुद्रेश्वरसदाशिवैः संयुक्ता। तदुक्तम्। ब्रह्मा जनार्दनो रुद्र ईश्वरश्च सदाशिवः। चित्राख्यनाड्यन्तःस्थाश्च पञ्चभूताधिदेवताः॥ ४। ५॥

ब्रह्मेति। इदमेव ब्रह्मसूत्रं शरीरिणां प्राणभृतां जीवभूतम् अमृतैककारणम् अस्मिन्नेव ज्ञायते मरणं न चरतीत्यर्थः। यद्ब्रह्मसूत्रं प्राचीना मुनयो दिव्यमार्ग इति कथयन्ति निर्वाणोपयोगी स एव मार्ग इत्यर्थः॥ ६॥

इड़ायां चरत्येव शीतांशुमाली
यतो वामभागेऽमृतं सम्प्रदिष्टम् ।
रविः पिङ्गलायां चरत्येव तस्माद्
विषं दक्षिणो भाग उक्तो मुनीन्द्रैः ॥ ७ ॥
जानीयादुदयं बुधः स्वजठरे कन्देऽशरीरे नृणाम्
प्राणास्तिस्मकराङ्गुले खलु लयं सन्ध्ये च पूर्वापरे ।
उत्पत्तिश्च लयश्च सन्ततमधोवृत्तिं निशां वासरम्
चोर्ध्वां वृत्तिमधस्तथा हिमकरं चोर्ध्वां दिनेशं गतिम् ॥ ८ ॥
तुषारांशुनाड़ीं प्रपन्ने तु देवे
तदा शान्तिकादीनि कर्माणि कुर्य्यात् ।
बुधो रौद्रकर्माणि मार्त्तण्डनाड़ी-
मुभे मिश्रकर्माणि नाड्यौ प्रपन्ने ॥ ९ ॥

---

इड़ायामिति । एष शिशिरकिरणो वामे इड़ासंज्ञायां नाड्यां चरति तेन वामभागेऽमृतमुक्तं पिङ्गला वामादिभ्यश्चरति सा च दक्षिणभागमाश्रितेति स भागो विषसंज्ञकः आदित्यस्य खेचरत्वात् वायुनियमेन सिध्यतीति ॥ ७ ॥

तस्योत्पत्तिविनाशस्थानमाह जानीयादिति । बुधः स्वशरीरे वायोर्गुदा कन्दे मूलभूते आधारे चक्रे उदयम् उद्भवं जानीयात् । तथा आधारचक्रं गुदोपरि लिङ्गाधःस्थिते वायुरुत्तिष्ठति प्राणाः स्थिरांदशाङ्गुले विनश्यतीत्यर्थः । तदेव स्थान-द्वयं पूर्वापरे सन्ध्ये क्रमात् पूर्वसन्ध्या प्राणे द्वादशाङ्गुलं बहिर्यातीति । पश्चादेतीति स्थानद्वयम् उत्पत्तिं लयं विनाशं च ते एव ज्ञातव्ये । आधारेति । वायोरधोगमनं निशां जानीयात् ऊर्द्ध्वगमनं वासरं दिवसं जानीयात् । चन्द्रं हि चक्रेव प्राणो रात्रिरपान इति तथाधोवृत्तिं चन्द्रं जानीयात् ऊर्द्ध्वं गमनमिति । अतएव योगार्णवे कर्मत्वधोमुखश्चन्द्रः शेषेत्वूर्द्ध्वमुखो रविरिति ॥ ८ ॥

केन नाड्यां कानि कर्माणि कर्त्तव्यानीत्याह तुषारांशुनाड़ीमिति तुषा-रांशुनाड़ीं इड़ां गते वायौ शान्तिजनकानि कर्माणि कुर्य्यात् । सूर्य्यनाड़ीं पिङ्गलां गते वायौ रौद्राणि दारुणानि कर्माणि कुर्य्यात् । चन्द्रमसः शीतांशु- 26705

भूतानामुदयं द्वयोरपि पुनः संलक्षयेत् पक्षयो-
स्तत्राधो वसुधोदयं निगदितं धीर्माधव दण्डस्थिते ।
देवेऽधःस्पृशि वारिणो हुतवहस्योर्ध्वं गते तूदयम्
तिर्य्यक्संस्पृशि मारुतस्य परितः स्पृष्टे नभस्कर्मणः ॥१०॥
वश्यस्तम्भनयोः प्रशस्त उदयो भूमेर्जलस्योदयः
शस्तः शान्तिकपौष्टिकादिषु शुभेष्वग्नाय वह्नेः पुनः ।
शत्रोर्मारणदारणादिकरणेषूच्चाटनोच्छासयो-
र्वायोः शान्तिकनिर्विषीकरणयोर्व्योम्नो हितस्योदयः ॥११॥

धरणेरुदये गदार्दितानाम्
यदि दूतः समुपेत्य पृच्छतीह ।
सहसा नहि रोगजा प्रबाधा
प्रशमं याति चिकित्सितापि सम्यक् ॥ १२ ॥

---

स्यात् मर्त्यस्य क्षरकारत्वादिति भावः । उभयनाडीस्थे वायौ शान्तिकानि रौद्राणि च कर्माणि कुर्य्यात् ॥ ९ ॥

भूतानामिति । द्वयोरपि पक्षयोः शुक्लकृष्णयोर्भूतानां पृथिव्यप्तेजोवाय्वाकाशानाम् उद्भवं संलक्षयेत् अवधारयेत् । तत्र भूतेषु मध्ये पृथिव्या उदयं प्राह-मध्यदण्डगते वायौ यदा प्रशस्यते दण्डाकारगतिर्भवति तदा भूमेरुदयं जानीयात् । देवे वायौ अधःस्पृशि सति वारिणो जलस्य उदयं जानीयात् । ऊर्ध्वं गते वायौ हुतवहस्याग्नेरुदयं जानीयात् । तिर्य्यक् पार्श्वद्वयं संस्पृशि वायोरुदयं जानीयात् । समस्तनासारन्ध्रे व्यापके वायौ वहति सति नभस्कर्मन आकाशस्य उदयं जानीयात् । ॥ १० ॥

एतज्ज्ञानफलमाह वश्येति । भूमेरुदये वश्यजनकं स्तम्भजनकञ्च कर्म कुर्य्यात् । जलभूतस्योदये सति शान्तिजनकं पुष्टिजनकञ्च कर्म कुर्य्यात् । झटिति स तु मारणादिजनके कर्मणि वह्नेरुदयः प्रशस्तः । शत्रोर्देशोन्मूलने नगरोच्छेदे च वायोरुदयः प्रशस्तः । निर्विषीकरणसान्त्वने च आकाशस्योदयः प्रशस्तः ॥ ११ ॥

प्रश्नमाह धरणेरिति । पृथिव्या उदये सति भैषज्यमसुकस्य भविष्यति दूत आगत्य पृच्छति तदा रोगजा पीड़ा सद्यः कृतप्रतिक्रियापि हठेन शान्तिं नयतीति

जलोदये व्याधिरुपैति शान्तिं मृत्युर्भवत्येव वसूदये च।
वायोदये वापि समीरणस्य व्योम्नोऽपि रोगैव रुजां विनाशः ॥१३॥
देवे दक्षिणभागगेऽथ पुरुषो रोगातुरो दक्षिणे
स्थित्वा पृच्छति पृच्छकः स पुरुषो जीवत्यरोगश्चिरम्।
वामायां तु रुजाकुलीकृततनौ वामाश्रिते चेश्वरे
वामा पृच्छति चेत् स्थिता गतगदा वामा चिरं जीवति ॥१४॥
देवे गते पृच्छति वामभागं स्थित्वा नरो दक्षिणतो यदीह।
तत्त्वासतोऽस्मादपि कष्टसाध्यं वदन्ति सन्तः खलु रोगजातम्
॥ १५ ॥
अन्तर्गते पृच्छति पृच्छकश्चेद्देवे नरो जीवति वीतरोगः।
तेनैव रोगेण बहिर्गतेऽस्मिन् परेतराजस्य पुरं प्रयाति ॥ १६ ॥
सर्वेषु कार्य्येषु यदीश्वरेऽस्मिन् अन्तर्गते वाञ्छितसिद्धयः स्युः।
बहिर्गतेऽमङ्गलमीश्वरेऽपि शुभाशुभं कर्मफलं तु विद्यात् ॥१७॥

---

कष्टसाध्यमित्यर्थः। जलस्योदये सति यदि पृच्छति तदा व्याधिः शान्तिं याति। वसून्वयेऽग्नेरुदये यदि पृच्छति तदा रोगार्त्तस्य मृत्युर्भवति। वसुकृताश्रमिति विधः। वायोरुदये यदि पृच्छति तदा मृत्युरित्यर्थः। आकाशोदये यदि आगत्य पृच्छति तदा तस्यैव रोगाणां विनाशो भवति ॥ १२ । १३ । १४ ॥

प्रकारान्तरमाह। देवे वायौ दक्षिणां सङ्कते सति तत्रैव स्थित्वा दूतो यदि पृच्छति तदा रोगार्त्तो जनो नीरोगः सन् बहुशतवर्षं जीवति। स्त्रियाः रोगगतायां वामभागगतो वायुर्भवति तदाश्रितो दूतः पृच्छति तदासौ रोगात् सा चिरं जीवति इति ॥ १५ ॥

देव इति। वामप्रदेशं गते वायौ दक्षिणांशं गत्वा दूतो यदि पृच्छति तदा कष्टसाध्यं नैरुज्यं वक्तव्यम्। दक्षिणगे वायौ वामभागगः पृच्छति तदा कष्टसाध्यं नैरुज्यं वदेत्। अन्तर्गत इति। अभ्यन्तरं गते वायौ यदि पृच्छकः पृच्छति तदा नीरोगी जीवति। तथावहिर्देशमाकृष्यावहिर्गते वायौ यदि पृच्छति तदा तेनैव रोगेण मृत्युमाप्नुयात्

आरभ्य दर्शप्रथमामुदेति वामे पुटे त्रीणि दिनानि देवः।
वामेतरे त्रीणि ततो दिनानि पूर्णां तिथिं यावदथैवमीश ॥ १८॥
अथारभ्य शुक्लान्यपक्षादिभूताम्
तिथिं त्रीणि देवो दिनान्यभ्युदेति।
पुटे दक्षिणे त्रीणि वामे तु यावत्
कुहूरेवमेवं समालक्षयेत्ता ॥ १९ ॥
एकस्य पक्षस्य विपर्य्ययेण
रोगाभिभूतिर्भवतीह पुंसाम्।
तयोर्द्वयोर्बन्धुसुहृद्विपत्तिः
पक्षत्रये व्यत्ययतो मृतिः स्यात् ॥ ॥ २० ॥

---

रोगी यातीति। कार्य्यान्तरे तत् प्रयोजनं कथयति। यदीश्वरे वायौ अन्तर्गते अत्र कार्य्ये आकाङ्क्षितसिद्धिर्भवति बहिर्गते आदशाङ्गुलादधिकं गते सर्वकार्य्याणि नश्यन्तीति। कति दिनानि कुत्र तिष्ठतीति कथयति॥ १६। १७ ॥

आरभ्येति। दर्श एव प्रथमा तिथिर्यस्याः प्रतिपदः सा दर्शप्रथमा प्रतिपत् तेन शुक्लप्रतिपदादितिथित्रये वामे चतुर्थ्यादि दक्षिणे सप्तम्यादि वामे दशम्यादि दक्षिणे त्रयोदश्यादि वामे कृष्णप्रतिपदादि दक्षिणे चतुर्थ्यादि वामे सप्तम्यादि दक्षिणे दशम्यादि वामे त्रयोदश्यादि दक्षिणे। अथेत्यनन्तरं शुक्लान्यपक्षादिभूतां कृष्णप्रतिपत्तिथिमुपक्रम्य त्रीणि दिनानि दक्षिणभागे वायुरुदेतीत्यादिसंख्या उक्ता एवं ज्ञात्वा पुरुष उदयं लक्षयेत् ॥ १८। १९ ॥

एकस्येति। यदि कस्य पक्षे वायोर्वैपरीत्यं भवति तदा तस्य पुरुषस्य रोगजनितोऽभिभवो भवति। शुक्लप्रतिपदादिदिनत्रयं यावद्वायुर्वामपुटे सञ्चरति तत्र यदि दक्षिणपुटे भवति एवं पक्षद्वयदिनपर्य्यन्तं यदि व्यत्ययो भवति तदा रोगाभिभूतिर्भवति मासमात्रं वैपरीत्येन सुहृदां विपत्तिः पञ्चचत्वारिंशद्दिनानि यावद्व्यत्ययो तस्य पुरुषस्य मरणं भवतीति। वायोर्वैपरीत्ये रोगादिकं भवतीति तात्पर्य्यार्थिकी श्रुतिः ॥ २० ॥

यदात्मनः कालवशात् समीरणो
विपर्य्ययेति प्रकृतिं विहाय सः।
तदा निरुध्य श्वसनं निपीडयेद्
यथा स्थितं पक्षमुपैति चात्मनः॥ २१॥

द्वावेव धत्तः सकलस्य कालं दिवाकरः कैरवबान्धवश्च।
भोक्त्री सुषुम्ना सकलस्य चास्य कालस्य दोषादिवसात्मकस्य॥२२

ततः क्रमेणैव विशुद्धनाड़ीपथान्तरः प्राणसमीरणस्य।
शनैः शनैः संयमने प्रयत्नं यथाविधानं विदधीत धीरः॥ २३॥

शीतांशुमार्गेण शनैः समीरमापूरयेत् स्वोदरमादरेण।
विकारमात्राभिरपेततन्द्रः कालाग्निमूलार्पितचित्तवृत्तिः॥२४॥

ततो धारयेन्मारुतं श्वचेतास्चतुःषष्टिमात्राः समापूरितं तम्।
रविभिर्भास्वता रेचयेन्मन्दमेनं तदर्द्धाभिरन्तर्निरुद्धं तु ताभिः॥२५॥

---

विपरीतोदये सूर्यादयः कथं स्यादित्याह यदेति। स्वकीयादृष्टवशाद्वायुर्वैपरीत्ये एतीति तदादिनिरोधं कृत्वा श्वासं पीड़येत् यथा पुटान्तरं गच्छति॥ २१॥

द्वावेवेति। कुमुदबन्धुश्चन्द्रः सूर्य्यश्चासौ सकलं कालं धत्तः दिवारात्रिरूपात्मकस्य रात्रिन्दिवोपलक्षितस्य कालस्य भोक्त्री भक्षिका सुषुम्ना परं नाम्ना नाड़ीभोक्तृत्वं नाम चित्कलासमवेतस्य तस्योपाधितया रूपत्वमापाद्य सर्वस्याभिभावकत्वमित्यर्थः॥ २२॥

तत इति। सुषुम्नैव भोक्त्री तदा क्रमेण विशोधितनाड़ीमार्गान्तरः सन् प्राणवायोः शनैः शनैः संयमने नियमे प्रयत्नं यथा कथितप्रकारेण कुर्वीत॥ २३॥

तमेव प्रकारं कथयति शीतांशुमार्ग इति। शीतांशोश्चन्द्रस्य वर्त्मना वामनाड्या वायुभिः स्वकीयमुदरं विकारमात्रया षोड़शमात्रया पूरयेत्। अपेता तन्द्रा निद्रा यस्य सः कालाग्निमूलाग्निमूलार्पितचित्तवृत्तिः। कालाग्निमूले मूलाधारेऽर्पिता चित्तवृत्तिर्व्यापारो येन॥ २४॥

तत इति। पूरितं वायुं चतुःषष्टिमात्रापर्य्यन्तं धारयेत् तस्य गतागतं निरोधयेत् भास्वता सूर्य्यमार्गेण दक्षिणया शनैस्तदर्द्धाभिर्द्वात्रिंशन्मात्राभिरभ्यन्तरे निरुद्धं वायुं रेचयेत् त्यजेत्॥ २५॥

विपरीतमतो विदधीत बुधः पुनरप्यथ तद्विपरीतमिति ।
अमुना विधिना सुमनाः सततं मरुतो विदधीत सुसंयमनम् ॥ २६ ॥
प्रस्वेदं जनयति यः प्राणायामेषु सोऽधमः प्रोक्तः ।
कम्पोमध्यः पुंसां भूमित्यागं तनोरुत्तमोऽपि परः ॥ २७ ॥
तावद्विदधीत बुधः प्राणायामं समाश्रितो विधिवत् ।
यावत् सम्भवति भुवि प्राणायामस्योत्तमस्य गुणः ॥ २८ ॥

अयं प्राणायामः सकलदुरितध्वंसनकरो
विगर्भः प्रोक्तोऽसौ शतगुणफलो गर्भकलितः ।
जपध्यानापेतः स तु निगदितो गर्भरहितः
स गर्भस्तूभ्युक्तो मुनिप्ररिवृतैर्योगनिरतैः ॥ २९ ॥
शुचिः प्राणायामान् प्रणवसहितान् षोडश वशी
प्रभाते सायञ्च प्रतिदिवसमेवं वितनुते ।
द्विजो यस्तं भ्रूणप्रहरणकृतांघोऽभिकलितम्
पुनन्त्येते मासादिह दुरिततूलौघदहनाः ॥ ३० ॥

त्रायन्त्यमी षड्भिरपीह मासैर्जन्मान्तरोपार्जितपापपुञ्जात् ।
संवत्सराद्ब्रह्मपदं तदेकं प्रकाशयन्त्येव यदच्युताख्यम् ॥ ३१ ॥
इह रेचकपूरकौ विहाय स्थिरधीः कुम्भकमेव केवलं यः ।
सततं कुरुते मनोजवत्वं लभते वीतजरामयः स मर्त्यः ॥ ३२ ॥

---

विपरीतमिति । अतः प्रकृताद्विपरीतं विदधीत कुर्यात् । पुनरपि तद्विपरीतं प्रकृतक्रमेणादिकं पुनरपि तद्विपरीतम् एवमभ्यसेत् अमुना प्रकारेण मरुतो वायो- र्नियमं न कुर्यात् ॥ २६ ॥

प्रस्वेदमिति । अर्थं सुगमः ॥ २७ ॥ २८ ॥

अयमिति । गर्भो गर्भयुक्तः प्राणायाम उक्तः सन् सकलदुरितानि विनाशयति गर्भेण सहितोऽयं शतगुणफलसहितः कथितः विगर्भापेक्षया स्रो विगर्भः कः सगर्भः इत्याकाङ्क्षायामाह जपेति । जपध्यानैर्युक्तो यः गर्भरहितः ताभ्यां युक्तो यः सगर्भः कथितः ॥ २९ ॥

भवति तस्य सुदुर्लभं त्रिलोक्या-
मिह यः केवलं कुम्भके विपश्चित् ।
पवित्र अणिमादिगुणाष्टकं सारकम्
ननु स एव निरन्तरस्य भीतिः ॥ २३ ॥

राजदन्तयुगलादिमस्थलम् सन्निधाप्य रसनां तदन्तिके ।
काकचञ्चुपुटमारुतं पिबेत् प्राणसंयमनमेतदुत्तमम् ॥ २४ ॥
द्विकचञ्चुसमीरणं शनैर्धयतः सम्परिणम्य सन्ध्ययोः ।
श्रमदाहगरोदरामयज्वरगुल्माः प्रशमं प्रयान्ति च ॥ २५ ॥
उभयोरपि सन्ध्ययोर्मुहूर्तं पिबतो वातु धयतस्त्रिमासमात्रम् ।
सरसं द्विकचञ्चुगन्धवाहं भुवि सारस्वतसिद्धिरुत्तमा स्यात् ॥ २६ ॥
विषमुग्रमुदग्रवीर्यभाजां प्रविनाशं समुपैति पन्नगानाम् ।
किमु वृश्चिककीटलूतकानामिह काकोलमुखानिलस्य पानात् ॥ २७ ॥
द्विकचञ्चुसमीरणं नरः सरसं यः परिपीय सन्ध्ययोः ।
कुरुते निजकुण्डलीमुखे क्षयरोगं स विमुच्य जीवति ॥ २८ ॥
द्विकचञ्चुसमीरणं नरो यः पिबतीहाग्निसमेव वीततन्द्रः ।

---

शुषिरित्यादि । चतुष्टयं सुगमम् ॥ २०—२३ ॥

राजदन्तेति । राजदन्तयुगलस्यादिमस्थलम् तेषाम् अन्तिके समीपे जिह्वां सन्निधाप्य काकचञ्चुपुटेन वायुं पिबेत् । काकचञ्चुपुटवन्मुखं कृत्वा पिबेदित्यर्थः । मध्यमूलदन्तचतुष्टयं राजदन्ताः एतदुत्कृष्टं वायोर्नियमनमिति ॥ २४ ॥

द्विकेति । द्विकचञ्चुभ्यां समीरणं वायुं धयतः पिबतः धेट् पाने । द्वाभ्यां ककाराभ्यां अन्वितो द्विकः काकः श्रमदाहं गरोविषम् उदरामयम् उदररोगः ज्वरः गुल्म इत्याद्याः प्रशमं प्रयान्ति ॥ २५ ॥

उभयोरिति । उभयोः प्रातः सायं सन्ध्ययोर्मुहूर्तं दण्डद्वयं यावत् प्रहरत्रय-मात्रं वा मासत्रयं वा त्रिमासं तत्र वायुं धयतः पुंसः काकचञ्चुपुटमारुतं पिबतः सारस्वत-सिद्धिर्भवति सन्ध्यामुहूर्तमात्रं प्रहरत्रयं वेति व्यवस्थितविकल्पार्थः ॥ २६ ॥

भवति भुवमेव तस्य वर्णाश्रमयं दर्शनमप्यतीव दूरजम् ॥३८॥
बहुधा कथितैर्मुहुः क्रिमिभिर्विवर्जयत्याः नु समीरणस्य पानात् ।
जरसा सह नाशमाशु याति प्रबलं मृत्युकृतं भयं नराणाम् ॥४०॥
जिह्वां कृत्वाऽग्रतालुस्थतालुमूले दन्तैर्दन्तान् गाढमापीडयित्वा ।
मन्दं मन्दं यः पिबेन्मध्यवाहं सौधैः पूरैः सावमत्तः समग्रैः ॥४१॥
षण्मासाभ्यासेन रोगैरशेषैः पापेभ्योऽसौ मुच्यते साधकेन्द्रः ।
अब्दादेकाद्विस्मरत्यां मृत्युदूतीं जित्वा भूमौ दीर्घकालं स जीवेत्
॥ ४२ ॥
वर्षत्रयाभ्यासवशादतीतमनागतं वेत्त्यखिलानीलवेगः ।
विषं न देहे क्रमति तदीये दष्टे सुघोरैरपि पन्नगेन्द्रैः ॥ ४३ ॥
न कृत्रिमं स्थावरजङ्गमं वा विषं क्रिमन्यैरपि कालकूटैः ।
गुणाष्टकं कालवशादुपेत्य महीतले क्रीडति भैरवो वा ॥ ४४ ॥
या मुण्डाधारदण्डान्तरविवरगताहारनीहारगौरी
सौधीं धारां नभोऽभीरहकुहरविधौ: संस्रवन्तीं वहन्ती ।
तस्या वज्राख्यनाड्याः खगमुदरदरीमध्यगं यो विदध्यात्
तस्या ब्रह्माण्डभाण्डप्रलयमपघनं स्यादघनं मृत्युमृत्योः ॥४५॥

---

विषमिति । काकीलः अयं सुगमम् ॥ ३७—४० ॥

जिह्वामिति । तालुप्रदेशे जिह्वां योजयित्वा उपरिस्थदन्तपङ्क्त्याऽधोदन्तावलिं आपीड्य सौधैः पूर्वमुखावस्थितैः सह मन्दवाहं वायुं पिबेत् अन्यत् सुगमम् । प्रकारान्तरमाह जिह्वामिति । सौधैर्मुखान्तर्गतरसैः विकसां गरां कृत्रिमविषं नारिकेलमिश्रितकर्पूरं स्थावरं हिमशैलजादिकं जङ्गमं पार्वतीयं व्याघ्रनाभिजन्यं गुणाष्टकम् अष्टसिद्धिभैरवावतारार्थे वाशब्दः ॥ ४१—४४ ॥

या मुण्डेति । सुषुम्नान्तर्गताया वज्राख्यनाड्या उदरमेव दरी कन्दरा तन्मध्यवर्तिनं खगं वायुं यो निधानं करोति तस्य पवने शरीरं मृत्युमृत्योर्घनं मुद्गरं भवति । मृत्युर्यमः तस्य मृत्युर्नाशकः तस्य लौहमुद्गरो भवति । घनः स्यात्ोह-

मूर्च्छां गतो हरति रोगसमूहमस्था-
बद्धः करोति गगने गमनं नराणाम् ।
यातो लयो वितनुतेऽमरतां समस्त-
मभ्यासतः सुलभमेव समीरणस्य ॥ ४६ ॥

अथ पार्ष्णिनिरुद्धकम्बुर्ना ध्वजमूलस्थितसव्यपादपार्ष्णिः ।
ऋजुकायशिरोधरो यतात्मा विषयेभ्यो विनिवर्त्तितेन्द्रियाश्वः॥४७

काकीचञ्चुप्रकृष्टैर्मुहुरुदरदरीं पूरयित्वा समीरै-
रङ्गुष्ठाभ्यामुभाभ्यां नररिपुविवरे तर्जनीभ्यां च नेत्रे ।
नासारन्ध्रं निरुध्य स्थिरविमलमतिर्मध्यमाभ्यामथान्य-
मन्याभि र्नातिगाढं कमलजनिलये स्थापयेन्मानसं स्वम् ॥४८॥

---

गुह्वर इत्यमरः। सा का सुषुम्नाधारदण्डान्तरविवरगर्त्ता सुषुम्नाया आधारभूतो दण्डः पृष्ठवंशात्मकः तदन्तर्गतसुषुम्ना तन्मध्यवर्त्तिनमित्यर्थः। कीदृशाइवे हिमवच्छुभ्रामृतधारां वहन्ती धारयन्ती आकाशदेशावस्थितपद्माभ्यन्तरवर्त्तिनी विधोश्चन्द्रस्य क्षरन्तीम् तथाच यः सुषुम्नान्तर्गतवायुं निरोधयति तस्य मरणं न भवतीत्यर्थः ॥४५॥

मूर्च्छामिति। मूर्च्छां निश्चेष्टत्वं गतः सन् इति यावत्। अज्ञातत्त्वेन रोगसङ्घातं निवारयति। बद्धः सन् नाड्यन्तरे निबद्धः आयत्तः सन् मनुष्याणाम् आकाशगमनं निराधारसञ्चारं करोति गतः मनसा सह याति स्वाभीष्टदेशं तथा विलीनः अमरताम् अमरत्वं नयति। तथाच मूर्च्छितो हरति व्याधिं निहन्यान्मरणं मृतः। बद्धः खेचरतां कुर्य्यात् बद्धो वायुश्च भैरवि ! ॥ ४६ ॥

प्रकारान्तरमाह अथेति। ना पुरुषः स्वीयमानसं कमलजन्मनो ब्रह्मणो निलये आधारकमलेऽवस्थापयेत्। कीदृक् पार्ष्णिना एकपादगुल्फेन निरुद्धः कम्बुर्निरुद्धगुह्यमार्गो येन सः। ध्वजमूले लिङ्गमूलेऽवस्थापिता अपरपादपार्ष्णिर्येन सः। ऋजुकायः अवक्रशरीरः यतात्मा इन्द्रियगणैव दुर्धरत्वादश्व इवाश्वः ॥ ४७ ॥

काकीति। काकचञ्चुमुखेनाकृष्टैर्वायुभिरुदरदरीं पूरयित्वा करद्वयाङ्गुष्ठाभ्यां नररिपुविवरे वक्ष्यमाणे नरो अर्जुनः तस्य रिपुः कर्णः कर्णविवर इत्यर्थः। तर्जनीद्वयेन नेत्रद्वयं मध्यमाभ्याम् अङ्गुलीभ्यां नासापुटं निरुध्य अन्याभिरङ्गुलीभिर्मुखं निरुध्य ॥ ४८ ॥

यथायथाभ्यासं प्रतिदिवसमेवं विदधतः
सुषुम्नान्तर्वायुं प्रचरति शनैर्देहपवनः।
तदा नादो नैजो भवति सहसानन्दजननः
क्रमाद्वीणावादिप्रहतमृदुवीणारवमयः॥ ४९॥

आदौ मत्तालिमालागलपथविगलत्तारझङ्कारहारी
नादोऽसौ वंशिकांस्यानिलभरिततलसद्वंशनिस्वानतुल्यः।
घण्टानादानुकारी तदनु जलनिधिध्वानधीरो गभीरो
गर्जं पर्जन्यघोषः पर इह कुहरे वर्त्तते ब्रह्मनाड्याः॥५०॥

विजिते भवतीह तेन वायुः सहजो यस्य समुत्थितप्रणादः।
अणिमादिगुणा भवन्ति तस्यामितपुण्यस्य महासुखास्पदस्य॥५१॥

सुरराजतनुजवैरिरन्ध्रे विनिरुध्य स्वकराङ्गुलीद्वयेन।
जलधेरिव धीरनादमन्तः प्रसवन्तं सहसा शृणोति मर्त्यः॥५२॥

परिभावयतोऽपि नादमेनं त्रिदशाधीशतनूजवैरिजातम्।
सततं भवतीह तस्य जन्तोर्गुणसम्पत्तिरपेतकल्मषस्य॥५३॥

शृङ्गाण्यङ्गुलिभिर्निरुध्य विधिवत् कोदण्डयोः पण्डितो
मध्ये बद्धमरुन्निरुध्य वृषभस्थेष्टच षष्ठेन्द्रियम्। 26705

---

यथेति। एवमनेन कथितप्रकारेण प्रतिदिनमभ्यसतः पुंसः सुषुम्नाभ्यन्तरे यदा वायुः सञ्चरति यदि तदा सततानन्दजनको ब्रह्मप्रदो नाद उत्पद्यते क्रमेण पुनर्वीणा समरवो भवति वीणावादिप्रहतत्वे नाभिप्रायमधुरध्वनिरिति। इयं सुगमम्॥४९—५१

सुरराजेति। सुरराज इन्द्रः तत्तनुजोऽर्जुनः तद्वैरी कर्णः तत्र स्वकरयोरङ्गुलिद्वयेन निरुध्य समुद्रस्येव गभीरं शब्दमभ्यन्तरे प्रसरन्तं शृणोति मर्त्यः तस्य गतपापस्य गुणावाप्तिर्भवति मोक्षप्राप्तिर्भवतीत्यर्थः॥ ५२। ५३॥

शृङ्गाणीति। शृङ्गाणीन्द्रियाणि ताभ्यङ्गुलीभिः प्रतिरुध्य कोदण्डयोर्भ्रुवोर्मध्ये निरुद्धपवनः वृषभस्थेष्टः। वृषो विषयः तं भजत इति वृषभः वृषभाणीन्द्रियाणि तदिष्टं षष्ठेन्द्रियं मनः तन्निरुध्य इत्यर्थः। कथमगीतं वेदान्तेषु अदहदहम्

साक्षात्तत्स्वयमेव पश्यति शनैर्वेदान्तगीतं परम्
ज्योतिस्त्रैपुरमन्त्रसूक्ष्ममखण्डमाभलक्षप्रभम् ॥ ५४ ॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
तृतीयः पटलः ।

---

## चतुर्थः पटलः ।

अथ पूरकयोगयोजितान्तः पृषदश्वो निजमूलचक्रदेशे ।
विदधीत बुधः समाहितोऽजोपपदग्रन्थिविभेदने प्रयत्नम् ॥१॥
शकृत् समुत्सृज्य यथा शनैः स्वं सङ्कोचयेत् कम्बुनि मार्गमर्वा ।
बुधस्तथाधारनियोजितात्मा सङ्कोचयेत् कम्बुनि मार्गमुच्चैः ॥२॥

---

आभलक्षप्रभम् एककालोदितनिष्कलङ्कानेकचन्द्रप्रभम् । अयमर्थः । इन्द्रियाणि स्वकराङ्गुलीभिर्निरुध्य भ्रुवोर्मध्ये स्वान्तस्थितवायुं स्वप्रभावक्रमेण यो नियमयति स शशिप्रभं वेदान्तवेद्यं परं ज्योतिःस्वरूपमात्मानम् अनुभवतीत्यर्थः ॥ ५४ ॥

इति त्रिपुरासारटीकायां पदार्थादर्शे तृतीयः पटलः ।

---

एवं प्राणायामेन पवनजययोगविशेषांश्चोक्त्वा जितामरतामविकारात्मामभ्युदय-निःश्रेयसप्राप्त्युपायभूतं मन्त्राणां छिन्नादिदोषपरिहारार्थं योनिमुद्राबन्धनप्रकारं वक्तुमुपक्रमते अथ पूरकयोग इत्यादिना । आदौ पूरकादियोगाभ्यासेन निजमूल-चक्रदेशे मनः संयोज्य अजोपपदग्रन्थिविभेदने यत्नं प्रकुर्वीत अजो ब्रह्मा स एव उप-पत्तिर्यस्य ग्रन्थिशब्दस्य तेन ब्रह्मग्रन्थिरित्यर्थः । समाहिताभ्यासध्यानः ॥ १ ॥

ग्रन्थिभेदप्रकारमाह शकृदिति । अर्वा अश्वः शकृद्विष्ठां समुत्सृज्य त्यक्त्वा येन प्रकारेण कम्बुनि मार्गे गुदमार्गे सङ्कोचयेत् तेन प्रकारेणाधारचक्रे संयुक्तात्मा बुधः । स्वीयं कम्बुनि मार्गे सङ्कोचं नयेत् ॥ २ ॥

विदधीत मुहुर्मुहुर्गुरूक्तक्रमतो कुञ्चितपङ्कजपाणिः ।
दृढबद्धगुदध्वजान्तरालस्थिततेजोमयपुष्करस्य योनिम् ॥ ३ ॥
अथ कम्बुनि मारुतं जितात्मा प्रतिलोमेन शनैः प्रवेशयेत्तम् ।
कमलासनपङ्कजस्य मूलं स्वगुरुप्रोक्तविधानतो दुरापम् ॥ ४ ॥
अमुना विधिना मुहुः कृतेन क्रमशः कम्बुनि मारुतस्ततोऽसौ ।
अजपङ्कजमूलदेशमार्गप्रणयी ग्रन्थिविभेदनं करोति ॥ ५ ॥
परिवृत्य खगाधिपस्ततोऽसौ सरणिं चन्द्रमसो नभोमणेः ।
कमलं कमलासनस्य पश्चाद्विदधीतोर्ध्वमुखं प्रविश्य सम्यक् ॥ ६ ॥
प्रतिभानमथाद्भुतं प्रविष्टे भवनान्तः परमेष्ठिनः खगेशे ।
लघुता वपुषो भवत्युदग्रा जठरान्तर्ज्वलनस्य चापि दीप्तिः ॥ ७ ॥

तडित्कोटिप्रख्यं सुरुचिजितकालानलरुचिम्
सहस्रादित्यांशुप्रकरसदृशोद्योतकलितम् ।

---

विदधीतेति । मुहुर्मुहुर्वारंवारं गुरूपदिष्टप्रकारेण करकमलद्वयं नाभेरधःस्थिततेजोमयपद्मासनस्य योनिं यत्नेन निरुध्य गुदलिङ्गमध्यतेजोमयपुष्करस्य योनिर्येन निरुद्धमूलाधार इत्यर्थः । अयमर्थः गुदध्वजयोर्मध्ये स्थितं यच्चतुष्पत्रं पद्मं तन्मध्ये त्रिकोणाकारा योनिरिति ॥ ३ ॥

अथेति । कम्बुनि मारुतमपानवायुं देशिकोक्तक्रमेणाकुञ्च्य शनैरूर्ध्वं नीत्वा कमलासनपङ्कजाख्यं सुषुम्नामूलं प्रवेशयेत् ॥ ४ ॥

अमुना विधिनेति । एवं मुहुर्मुहुरभ्यासेन अधोवक्त्रं निरुध्य तदन्तर्ब्रह्ममार्गस्थितग्रन्थिभेदनं करोतीत्यर्थः ॥ ५ ॥

परिवृत्येति । अपानस्य ऊर्ध्वगतित्वेन प्राणात्मकत्वात् खगाधिपत्वाख्यां लभते । एवमूर्ध्वगमनाय प्रवृत्तोऽपानवायुः सोमसूर्यात्मकेडापिङ्गलामार्गौ परिहृत्य कमलमूलं सुषुम्नामूलम् उपविश्य ऊर्ध्वमुखं करोति ॥ ६ ॥

प्रतिभानमिति । खगेशेऽपानवायौ ब्रह्मणो भवनाभ्यन्तरं प्रविष्टे सति अद्भुतम् आश्चर्यजनकं प्रतिभानं भवति वपुषः उदग्रा लघुता भवति ॥ ७ ॥

तडित्कोटिप्रख्यमिति । कामशरीराग्निं ध्यायेत् । कीदृशं विद्युत्कोटितुल्यम् । स्वतेजसा विजिता कालानलस्य रुचिर्येन तादृशं सहस्रसंख्यकादित्यकिरणसमूहतुल्येन

भ्रमन्तं योन्यन्तः स्फुरदरुणबन्धूककुसुम-
प्रभं कामं ध्यायेज्जठरशशभृत्कोटिशिशिरम् ॥ ८ ॥
तस्योर्द्ध्वेऽग्निशिखा चिरद्युतिलतापुञ्जप्रभाभास्वरा
सूक्ष्मा ब्रह्मपथान्तराम्बरगता चैतन्यमात्रा कला ।
एकीभूतमनन्तरं सह तया ध्यायेद्धिया निश्चलम्
आत्मानञ्च निवातदीपनिभया हंसस्वरूपं बुधः ॥ ९ ॥
शक्तिः कुण्डलिनीति या निगदिता शाईमसंज्ञा जग-
न्निर्माणे सततोद्यता प्रविलसत्सौदामिनीसन्निभा ।
शङ्खावर्त्तनिभां प्रसुप्तभुजगाकारां जगन्मोहिनीम्
तन्मध्ये परिभावयेद्विषलतातन्तूपमेयाकृतिम् ॥ १० ॥
हुङ्कारेण गुरूपदिष्टविधिना प्रोत्थाप्य सुप्तां ततः
कृत्वा तां कलया तया परमया चिद्रूपया सङ्गताम् ।
मायां कुण्डलिनीं समाहितमनास्तामुच्चरेत् कौशिकीम्
शक्तिं ब्रह्ममहापथेन सहितामाधारतः स्वात्मना ॥ ११ ॥

---

योनीति कलितं सम्बद्धं योन्यन्तराधारचक्रस्याभ्यन्तरे भासमानं बन्धूकशब्देन रक्ता-
भं शशभृल्लक्षशिशिरम् । एतेन साधकानामानन्दजनकत्वं बोध्यते । काममिति
मशब्दोऽत्रस्त्यागमे शरीरवैश्वानरे रूढः । एवं तेजोमयं कामं स्वाधारगमनं भाव-
येत् । यथोक्तं रुद्रयामले—अमं योनिगतं ध्यायेत् कामं बन्धूकसन्निभम् ।
लक्षाशानलप्रख्यं वह्निकोटिसमप्रभम् इति ॥ ८ ॥

तस्येति । तस्य कामराजाख्यजातवेदस उपरि शिखारूपातिसूक्ष्मा विद्युत्पुञ्ज-
प्रभा चिद्रूपा या कला सा शक्तिरिति । केचित्तु विद्युत्पुञ्जसन्निभा चिद्रूपात्म-
का निष्कला ध्येया इत्युपपद्यते । परमहंसस्वरूपात्मानं तया कलया एकीकृत्य
ध्यायेदिति ॥ ९ ॥

शक्तिरिति । तया कलया या चिद्रूपा कला कुण्डलिनीशक्तिरिति कथिता
लिङ्गवेष्टनात्मिका परिभावयेत् । तन्मध्ये स्थितां ध्यायेदित्यर्थः ॥ १० ॥

कुण्डलिनीं संपिण्ड उत्थापयति हुङ्कारेति । हुङ्कारेण मन्त्रसहितेन गुरूपदेशप्रका-

भित्त्वा लिङ्गत्रयमथ बुधो ब्रह्मनाड्येव घोरम्
गच्छन्तीं तां कमलजपदात् प्रापयेदात्मशक्तिम् ।
श्रीमायाबीजप्रथयिपरमानन्दकन्दं विसर्ग-
स्थानं चन्द्रोपरि परिगलद्रक्तपीयूषधारम् ॥ १२ ॥

पीत्वा कुलामृतरसं पुनरेव दिव्यम्
मध्यं विशेदपथगस्य समाहितात्मा ।
यायात् कुलादकुलमेवं पुनश्च माया-
योगेन देशिकवरप्रतिपादितेन ॥ १३ ॥

सा शक्तिः सकलशरीरजीवभूता
प्राणोऽसाविति गदिता च तन्त्रमुख्यैः ।
उच्छ्वासः स तु परिपठ्यते मुनीन्द्रैः
प्राणोऽन्तः स्फुरति यदा क्रमेण नीतः ॥ १४ ॥

अमुं स्वाधारस्थं प्रतिदिवसमभ्यासनिरतः
करोति श्रद्धावान् संततमवधूताखिलमलः ।
स मुक्तो दुःखौघैरपगतजराशङ्कमरणो
गुणग्रामोपेतः सुर इव चिरं जीवति भुवि ॥ १५ ॥

---

रैव तां कुण्डलिनीं आधारकमले सुप्तामुत्थाप्य प्रबोध्य अनन्तरं तया परमचै-तन्यरूपया मिलितां कुण्डलिनीं मायां कुलं मूलाधारः तत्रस्थां शरीरस्य देवतां चिन्तयेत् । अकुलं शिव इत्युक्तः कुलं शक्तिः प्रकीर्तिता । जीवं तेजो विचार कादिति वितथनिर्णय इति ॥ ११ ॥

भित्त्वेति । अथ कथितं लिङ्गत्रयं विभिद्य ब्रह्मनाड्या सुषुम्नया ब्रह्मणः स्थाना-दूर्ध्वं तां कुण्डलिनीं शक्तिम् श्रीमायाबीजप्रथयितृम् श्रीमायाबीजकन्दपरमा-नन्दस्य विसर्गस्थानं प्रापयेत् ध्यायेत् ॥ १२ ॥

पीत्वा कुलामृतरसमिति । एवं तां सहस्रारचन्द्रं नीत्वा तत्रस्थं दिव्यं सुधारसं पीत्वा तेनैव मार्गेण विपरीतक्रमेण अपथगस्य मध्यं कुलाख्यं मूलाधारं प्रापयेत् शरीरमध्यं मूलाधारनिलयः । अथ शक्तिर्दिव्याः मायायोगेन गुरुसंप्रदायोक्त

तुर्विधा या अधिमैव सृष्टिः प्रवर्त्तते सा सकलापि यस्याम् ।
लीयते चापि जगत् समस्तं कालाग्निरुद्रादिशिवान्तमेतत्
॥ १६ ॥
यं मयोक्ता खलु योनिमुद्रा बन्धस्तु देवैरपि दुर्लभः स्यात् ।
नेन बन्धेन न साध्यते यत्साध्यं च तत् साधकपुङ्गवस्य ॥१७॥
छिन्ना रुद्धाः स्तम्भिताः कीलिता ये
सुप्ता मत्ता मूर्च्छिता हीनवीर्य्याः ।
दग्धाः त्रस्ताः शत्रुपक्षस्थिता ये
बाला वृद्धा गर्विता यौवनेन ॥ १८ ॥
निर्जीवा ये च सत्त्वेन हीनाः षण्ढीभूतास्तत्त्वमन्त्रैर्विहीनाः ।
ते मुद्राबन्धनेनापि येऽन्ये मन्त्राः सर्वे वीर्य्यवन्तो भवन्ति ॥१९॥

---

मेव गतागतं विदधीत । नादा तु—बिन्दुनादस्तथा शक्तिर्नादाश्रयमुद्राङ्कनमिति ।
या हि नादापदेन पीठत्रयं विधीयते । आधारस्थानगतो बिन्दुः तत्स्थाने प्रका-
कस्वरूपं पूर्वाख्यं पीठं तदुपरि स्वाधिष्ठानमध्ये विन्दात्मकप्रकाशरूपस्य शिवात्मक-
ध्रुवदूपनादात्मकस्य नादाख्यं द्वितीयं पीठं तदुपरि शिखा विमर्शात्मिका शक्तिरूपं
या उक्ता खलु निश्चये अस्या मुद्राया बन्धनं देवैरपि दुर्लभम् । योनिमुद्राया
नेन बन्धनप्रकारेण यन्न साध्यते तदा असत्यम् तथा सर्वमेवानया मुद्रया साध्यत
त्यर्थः । इयं का इह जगति या चतुःप्रकारा सृष्टिरुक्ता यस्यां प्रवर्त्तते यतो भवती-
र्थः । उद्भिदस्तरुगुल्माद्याः स्वेदजाः क्रिमिदंशाद्याः जरायुजा मनुष्याद्याः अण्डजाः
विसर्पादयः । केचित्तु शब्दसृष्टिः शब्दार्थसृष्टिः प्रकृतिपुरुषसृष्टिरिति वदन्ति ।
अथवा नैयायिकमते पुरुषसृष्टिः सांख्यमते प्रकृतिपुरुषयोगात् पातञ्जलमते केवल-
प्रकृतेः मीमांसकमतेऽदृष्टादिति । चतुर्विधा सृष्टिः समस्तं जगदपि यस्यां कालाग्नि-
रुद्रादिरूपां यस्यामेव लयं याति पूर्वोक्तध्यानविशेष एव मुद्रा ॥ १६—१७ ॥

छिन्नेति । युग्मकम् । एते सर्वे मन्त्रा योनिमुद्राया ध्यानविशेषेण वीर्य्ययुक्ता
भवन्ति । एतैश्छिन्ना मन्त्रीयंस्यादिमध्यान्ते स्थानेन बीजमुच्यते । संयुक्तं वा वियुक्तं
वायुनाक्रान्तं त्रिधा पुनः । चतुर्धा पञ्चधा वाथ स मन्त्रश्छिन्नसंज्ञकः । आदिमध्याव-
सानेषु भूबीजद्वयलाञ्छितः । रुद्धमन्त्रः स विज्ञेयो भुक्तिमुक्तिविवर्जितः । ये च

गुरुतल्पनिषेवणञ्च पानं द्विजहत्या मधुनः सुवर्णचौर्य्यम् ।
अमुना विलयं प्रयान्ति सम्यक् सततादभ्यासचरितेन बन्धनेन ॥२०॥
स तु मन्त्रिवरः स एव योगी गुणसिद्धेः पदमाश्रितः स एव ।
अमुना चरतीह बन्धनं यः सततं स्वोचितधर्मकर्मनिष्ठः ॥ २१ ॥
अमुना भवतीह देहभाजां सततमभ्याससञ्जातेन बन्धनेन ।
न जरा पलितराजवैजयन्ती न च मृत्युप्रतिपादिता च भीतिः ॥२२

---

कीलिताः-आदिमध्यावसानेषु हंसः प्रासादवाग्भवौ । हकारो बिन्दुमान् जीवो वाग्भवश्च चतुष्कलः । माया नमामि च पदं नास्ति यस्य स कीलितः । ये स्तम्भिताः । एकं मध्ये स्वयं मूर्ध्नि यस्मिन्निन्द्रपुरन्दरौ । न विद्यते स मन्त्रः स्यात् स्तम्भितः सिद्धिरोधनः । ये च सुप्ताः । त्रिवर्णो हंसहीनो यः स सुप्तश्च उदाहृतः । ये च मत्ताः । मन्त्रो वाप्यथवा विद्या सप्ताधिकदशाक्षरः । फट्कारः पञ्चकादिर्यो मदोन्मत्त उदीरितः । ये च मूर्च्छिताः । पञ्चधास्त्रं स्थितं मध्ये यस्य मन्त्रः स मूर्च्छितः । ये हीनवीर्य्याः । विरामस्थानगं यस्य हीनवीर्य्यः स कथ्यते । ये च दग्धाः । वह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्द्धनि । सप्तधा दृश्यते तन्तु दग्धं मन्त्री-समन्त्रवित् । ये च त्रस्ताः । अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्दृश्यतेऽक्षरैः । त्रस्तः सोऽभिहितो मन्त्रः । ये च शत्रुपक्षे स्थिताः । तारादिभिरननुकूलाः । ये च बालाः । सप्तार्णोमनुर्बालः । ये च वृद्धाः । त्रिंशद्वर्णश्चतुःषष्टिवर्णो मन्त्रः शताक्षरः । चतुः-शताक्षरश्चापि वृद्ध इत्यभिधीयते ॥ ये च युवानः । षोडशार्णो युवा प्रोक्तः । ये च जीवहीनाः । षडक्षरो जीवहीनः । ये च सत्त्वहीनाः । द्विवर्णः सत्त्वहीनः स्यात् । ये अङ्गहीनाः । षड्विंशत्यक्षरो मन्त्रः षट्त्रिंशद्वर्णकस्तथा । पञ्चोनविंशद्वर्णो-वाप्यङ्गहीन उदाहृतः । इत्यादिदोषदुष्टा अपि मन्त्रा अनेन ध्यानेन सिद्धा भवन्ती-त्यर्थः ॥ १८ ॥ १९ ॥

गुरुतल्पनिषेवणमिति । सततादभ्यासचरितेनापि योनिमुद्राबन्धनेन पुरुषो महापातकान्मुक्तो भवतीत्यर्थः । अमुना इति । ईदृशाम् अमुना योनिमुद्राबन्धनेन सर्वदा कृतेन प्रभुर्वा भवति । कीदृशो पितृराजस्य यमस्य बन्धनस्य सततमभ्यासात् मनुष्योऽणिमाद्यष्टविधगुणान् प्राप्नोति उत्तमां प्रतिपत्तिं मानञ्च प्राप्नोति । योगाभ्यास

एतस्यैव हि बन्धनस्य मनुजः प्राप्नोति यद्यत् ततो-
ऽभ्यासाद्ग्रहिमादिसिद्धिमथवा संवित्तिमप्यूर्जिताम्।
योगस्याप्रतिमं जयञ्च मरुतः कालस्य वा वञ्चनम्
तद्विष्णोः परमं पदन्तु सततं पश्यन्ति यत् सूरयः॥ २१॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
चतुर्थः पटलः॥

---

## पञ्चमः पटलः।

अथाधारपङ्केरुहाण्यत्र वक्ष्ये सुषुम्नान्तरस्थानि संक्षेपतोऽहम्।
तदम्भोजपत्रस्थितांश्चापि देवांस्तदम्भोजवर्णान् षडाधारदेवीः॥१॥
अजग्रन्थिपद्मं पुरा यन्मयोक्तं तदाधारमाद्यं वदन्तीह शम्भुः।
सुवर्णाभवर्णैश्चतुर्भिः समेतं दलैर्योगिगम्यं महाश्चर्यभूतम्॥२॥

---

योगाभ्यासस्य प्राप्नोति वायो विजयमाप्नोति कालस्य वा वञ्चनं सकलस्य च प्रेरणम्। वा स्यात् विकल्पोपमयोरेवार्थे च समुच्चये। विष्णोश्च तत्पदं स्थानं पश्यन्ति सूरयः॥ २०—२१॥

इति त्रिपुरासारटीकायां पदार्थदर्शे चतुर्थः पटलः।

---

एवमधिकारिणामभ्युदयनिःश्रेयसप्राप्त्युपायभूतां योनिमुद्रामुक्त्वा अनन्तरं षडाधारेषु योगविशेषान् वक्तुमुपक्रमते अथाधारपङ्केरुहाणीत्यादि। सुषुम्नान्तरस्थानीति या पूर्वोक्ता सुषुम्नान्तरेऽवस्थिता या चित्रा नाडी तदन्तर्मूलाधारादिषट्पद्मानि सन्ति तान्येव षडाधाराणीत्यर्थः। तेषामम्भोजानां पत्रावस्थितान् देवान् ब्रह्मादीन् अम्भोजानां वर्णान् ब्रह्मादीन् अपराणि च आधारभूतान् षड्देवांश्च वक्ष्ये इति सम्बन्धः॥१॥

अम्भोजानि कथयति अजेति। योनिमुद्राकथनप्रकारेण यदुक्तं चतुर्दलात्मकं पद्मं तदेवाधारमाद्यं ते योगिनः। देवीनिवहान् नवादाद्यक्षिवर्णान् वमवसान् पूर्वादिक्रमेण न्यसेत्। नवेन्द्राक्षिवायूनिति पाठे नवं वकारः इन्द्राक्षिरिन्द्रवितीयं

चतुर्ष्वंशपत्रेषु देवीनिवासान्
जलाद्यब्धिवर्णान् न्यसेत् केवलान् वा।
सबिन्दूनमन्दप्रभावान् समिद्ध-
स्फुरज्ज्योतिषो डाकिनी देवताग्र ॥ ३ ॥

मूलाधारे सततं ध्यानयोगात्
सञ्चोभौ तत्प्लुति र्दार्दुरीव।
भूमित्यागः खेचरत्वं क्रमेण
नृणामेते षड्गुणाः सम्भवन्ति ॥ ४ ॥

कान्तिप्रकर्षो वपुषोऽपि नादव्यक्तिः प्रदीप्तिर्जठरानलस्य।
लघुत्वमङ्गस्य निजेन्द्रियाणां पटुत्वमारोग्यमदीनता च ॥ ५ ॥

कृत्वा मनोनिश्चलमूलचक्रमध्ये नराः केवलमादरेण।
भूतं भवच्चापि भविष्यदर्थं वदन्ति शास्त्राण्यपि चाश्रुतानि ॥६॥

---

शकारः। एवमग्रे तृतीयं षकारः मध्यवर्ण उक्तः। एवं वायोर्यकारस्य चतुर्थो दन्त्यसकारः। तेन वं शं षं सं इति वर्णान् प्रथमाद्यं बीजं ततो वकारः तत्र आद्यं बीजं एवं क्रमेण चतुर्दलेषु चत्वारो वर्णा न्यसनीया इत्यर्थः। केवलान् वा केवलं बिन्दुयुक्तं न्यसेत्। तत्र चतुर्दले डाकिनीरूपा देवी एतत्सकलप्रपञ्चमूलभूतत्वात् मूलाधारमिति योगिनो वदन्ति। अस्मिन् मूलाधारे ध्यानाचरणात् पुंसः सञ्चोभौ भवतः। निष्क्रियत्वं भवति। तत्प्लुतिः उत्पतनं दार्दुरी दर्दुरी मण्डूकसम्बन्धिनी प्लुतिरिति यावत्। भूमित्यागश्च भवति तदनु खेचरत्वं भवति। आकाशेऽपि स्वेच्छाविहारित्वं भवति क्रमेण एते षड्गुणा भवन्ति ॥ २—४ ॥

अन्यान् गुणान् दर्शयति कान्तीति। शरीरस्य कान्त्युत्कर्षो भवति। नादव्यक्तिः नादो ध्वनिविशेषः। जठरानलस्य उद्दीपनः इन्द्रियाणां चक्षुरादीनामकपटत्वं भवति। योगिनो हि इन्द्रियासन्निकृष्टमप्यर्थं पश्यन्ति। नैरुज्यञ्च भवति दुःखराहित्यञ्च भवति एतत् सर्वं वायोर्धारणाद् भवति ॥ ५ ॥

अन्यदपि प्रयोजनं दर्शयति कृत्वेति। अत्र मूलचक्रमध्ये आधारकमले आदरेण मनः स्थिरं कृत्वा भूतं वर्तमानं भविष्यदपि वदन्ति। अतीतानागतान् वदन्ति। अश्रुतान्यनधीतान्यपि शास्त्राणि वदन्ति व्याख्यान्ति ॥ ६ ॥

विहाय सद्यः कमलासनस्य वक्त्राम्बुजं प्रीतितरङ्गसङ्गात् ।
तदीयवक्त्राम्बुरुहोदरान्तः सरस्वती नृत्यति दिव्यरूपिणी ॥७॥
अधिगम्य रसेन्द्रमन्त्रसिद्धो अपि कालञ्च विजित्य दुर्निवारम् ।
अजरामरतामवाप्य चान्ते परमानन्दपदे मुदा रमन्ते ॥ ८ ॥

एकीभूतार्णवाम्भःप्लुतमखिलजगत् पूर्वमासीदपूर्व-
ज्योतिर्मूर्त्तिस्तदन्तर्महितमहिमभूर्लिङ्गरूपी बभूव ।
षट्सिद्धाधिष्ठितात्मा सकलसुरनुतः षड्भिराम्नायरूपैः
षड्भिः कोषैश्च देवो भवभयतिमिरध्वंसहंसो महेशः ॥९॥
आद्यं लिङ्गवपुर्भृतो भगवतो देवोहिरण्योऽभव-
द्वाणी पूर्वमुखं शिवस्य तु महाकालस्तदूर्द्ध्वाननम् ।
वक्त्रं दक्षिणमाशुशुक्षणिरसौ देवः पिनाकी पुनः
पाश्चात्यं छगलाण्ड एष भगवान् वामास्यमस्याभवत् ॥१०॥

---

प्रयोजनान्तरमाह विहायेति । कमलासनस्य ब्रह्मणो मुखाम्बुजं प्रीतिरिव तरङ्गसम्बन्धात् त्यक्त्वा तदीयवक्त्राम्बुरुहोदरान्तरे वायुधारणात् कर्त्तुस्तु श्रीमोहदा-भ्यन्तरे दिव्यरूपा सरस्वती नृत्यति अभिरमति ॥ ७ ॥

प्रयोजनान्तरमाह अधिगम्येति । रसेन्द्रमन्त्रसिद्धो अधिगम्य दुर्निवारञ्च कालं जित्वा अजरामरतामवाप्य अवसानकाले परमानन्दपदे मोक्षपदे रमन्ते । तस्मात् ध्यानयोगात् जीवन्मुक्तो भवति । अवसाने परमात्मनि लीनो भवतीत्यर्थः ॥ ८ ॥

एकीभूतेति । पूर्वमखिलं जगत् एकीभूतं समुद्राम्भःप्लुतमासीत् । तस्मा-भ्यन्तरे महेशो देवो लिङ्गरूपी बभूव कीदृशः अपूर्वज्योतिःस्वरूपः अपूर्वतेज एव लिङ्गरूपत्वेन परिणाममगमदित्यर्थः । कीदृशः षड्भिः सिद्धैर्हिरण्यादिभिरधिष्ठि-तात्मा तस्य लिङ्गवपुर्भृतो भगवत आद्यम् ऊर्द्ध्वं मुखं हिरण्यनामा सिद्धपुरुषः आसीत् । पूर्वमुखं वाणी नाम ऊर्द्ध्वाननम् अधआननमित्यर्थः । दक्षिणं वायुः पिनाकी पश्चिमास्यं उत्तरं छगलगण्डः तथा आधारात्मा हिरण्यः स्वाधिष्ठानात्मा वाणी मणिपूरात्मा महाकालः अनाहतात्मा वह्निः विशुद्धात्मा पिनाकी आज्ञात्मा छगलण्डः । वह्निरूपम् एषु स्थानेषु चिन्तनीयम् ॥ ९ । १० ॥

स्वाधिष्ठानसमाह्वयं रसदलैर्मूले ध्वजस्याम्बुजम्
बालादित्यनिभं दलोपरिगतैः पृष्ठादितर्कांक्षरैः।
विन्दूद्भासितमस्तकैर्भगवतोलिङ्गात्मनः शूलिनः
स्थानं योगिवरैरगोचरमिदं चास्याधिपा राकिणी ॥११॥

इह स्वाधिष्ठाने निहितनिजचेतो लयवशा-
दमन्दानन्दौघस्तिमितहृदयः साधकवरः।
समेताङ्गोऽनङ्गः क्षितितलगतो वा जगद्वशाम्
स्मरस्मेरापाङ्गं रमयति गणं कान्तिकलितम् ॥१२॥

इह वेत्ति निधाय मानसं स्वं विविधं चाम्रुतशास्त्रजालमुच्चैः।
अवधूतजरामयः स मर्त्यः सुचिरं जीवति वीतमृत्युभीतिः ॥१३॥
वपुषोऽप्यचिता जनस्य शश्वत् परमां शुद्धिमिहातनोति पुंसाम्।
शरदम्बुजपेलवस्य देहे दृढरूढो घनताच्च शीतरश्मिः ॥१४॥
चलितं सहसा महारसेन्द्रं कमलालोकनतो वियत्सरोजात्।
इह ये विनिधारयन्ति सन्तो ननु धीराः पुरुषोत्तमास्त एव॥१५॥

---

स्वाधिष्ठानमिति। तदूर्ध्वे रसदलैः षड्दलैः पृष्ठादितर्कांक्षरैः पृष्ठं बकारः तदादितः भयरलः एभिर्बिन्दुभूषितमस्तकैः सबिन्दुकैर्युक्तं बालादित्यनिभं प्रातः-कालीनसूर्यतुल्यम् अस्य चक्रस्याधिपा राकिणी ॥ ११ ॥

इह किल समलब्धानां नियमितमनसां योगिनीकलातिशयं दर्शयति इह स्वाधिष्ठान इति। लयवशात् पद्मोदरनिवेशवशात् समेताङ्गोऽनङ्गः जगद्वशीगणं रमयति। तथा स्मर स्मेरापाङ्गं स्मरेण स्मेरमल्पप्रकाशम् अपाङ्गं नेत्रयोरन्तं यस्य गणस्य तम्। तथा कान्त्या लावण्येन कलितं संयुक्तम् ॥ १२ ॥

विशेषफलमाह इहेति। विगतजरामयः स मर्त्यः इह पद्मे स्वं मानसं निधाय अर्पयित्वा अमृतशास्त्रसमूहं विविधं नानाप्रकारं वेत्ति वीतमृत्युभीतिः त्यक्तयम-भयः। अस्य पद्मस्य दर्शनात् अप्यचिता जनस्य शरीरस्य नित्यं शुद्धिं तनोति पुंसः शीतरश्मिः चन्द्रः दृढबन्धः सन् घनतां निविडतां प्राप्नोति शरदम्बुजवत् पेलवः सुन्दरः ॥ १३ । १४ ॥

मदधौतकटो महागजेन्द्रो वशतामेति यथा शनैरुपायात्।
बलवानिह वै सुधाकरोऽसौ क्रमतश्च स्ववशो भवत्यवश्यम् ॥१६॥

एतस्मिन् कुलिशाब्जयोगनिरतादादौ लयो जायते
रागादीन्द्रियदन्तिनां लयवशात् संवित्तिरप्यूर्जिता।
अन्तर्नीलमहारसद्रवजुषां नृणान्तु चेतो यदा
आविर्भावमुपैत्यमन्दसहजानन्दच्छलेन्दूदयः ॥ १७ ॥

नाभिस्थं मणिपूरकं दशदलैर्नीलाञ्जनाभैर्युतम्
तड्डाद्यैश्च दशाक्षरैर्दलगतैर्विन्दूल्लसन्मस्तकैः।
लाकिन्या समधिष्ठितञ्च सततं ध्यानैर्नराः केवलम्
वश्याकर्षणनिर्विषीकरणपूःक्षोभादिकं कुर्वते ॥ १८ ॥

स्थानेऽस्मिन्निहितात्मनः सुकृतिनः पातालसिद्धिं पराम्
खड्गस्याप्रतिमस्य साधनमपि स्यादीप्सितञ्च क्षितौ।
रूपं भूमिविसर्जनं परपुरे शक्तः प्रवेष्टुं जरा-
हानिश्चाखिलदुःखरोगशमनं कालस्य वा वञ्चनम् ॥ १९ ॥

---

चलितमिति। सहस्रदलाञ्चलितं रसेन्द्रं शुक्रम् एतत्कमलालोकनतो ये विनिधारयन्ति ते पुरुषोत्तमाः। एतत्पद्मभावनयोगशक्ताः ॥ १५ । १६ ॥

एतस्मिन् कुलिशाब्जेति। तदेव योगः तस्मिन् रतात् रागादीन्द्रियदन्तिनां लयो भवति अतएव कुलिशत्वेन निरूपितम्। संवित्तिः ऊर्जिता। अन्तर्नीलमिति। अन्तर्नीलं यन्महारसं शुक्रं तदेव रसं तत्सेवितानां नृणां चेतो यदा आविर्भावं प्राप्नोति तदा अमन्दं महत् यत् सहजानन्दं तच्छलेन अविद्याध्वंसात्मभ्युदयात् इन्दुत्वेन निरूपितः ॥ १७ ॥

मणिपूरकमाह नाभिस्थमिति। नीलाञ्जनतुल्यैर्दशदलैर्युतम् इष्टैः ड ढ ण त थ द ध न प फ एतैर्दलगतैः विन्दूल्लसन्मस्तकैः सविन्दुकैर्युतं लाकिन्या समधिष्ठितञ्च एतद्ध्यानात् वश्याकर्षणनिर्विषीकरणं परपुरक्षोभकरणं परपुरप्रवेशं तिरस्करणी गुटिकाविद्या इति यस्य प्रसिद्धिः। ननु रक्तात् मणिपूरकमिति वचनात् कथं नील-रक्तमिति चेत् नीलरक्तस्यापि रक्तत्वान्न दोषः। पातालसिद्धिः अधो विवरकरणं

हृदये रसेन्द्रगोपसन्ध्याघनसिन्दूरसुवर्णमब्जम्।
यदनाहतमित्युशन्ति सन्तो रविसङ्ख्यैरुपशोभितं दलैः ॥२०॥
क्रोधीशाद्यैर्भैरवैर्भानुसंख्यैर्दण्डोपेतं मण्डितं चन्द्रबीजैः।
तत् काकिन्याधिष्ठितं दिव्यशक्त्या देव्या हंसेनापि देवेन शश्वत्
॥ २१ ॥

एतस्मिन् सततं निविष्टमनसः स्थाने विमानस्थिताः
क्षुभ्यन्त्यद्भुतरूपकान्तिकलिता दिव्यस्त्रियो योगिनः।
ज्ञानञ्चाप्रतिमं त्रिकालविषयं क्षोभः पुरस्य श्रुति-
र्दूरादेव च दर्शनञ्च खगतिः स्याद्योगिनां मेलनम् ॥२२॥
विशुद्धाख्यं कण्ठे नलिनमथ धूम्रानलरुचि-
युतं श्रीकण्ठादिस्वरपरिगतैः षोडशदलैः।
इह स्थाने शाकिन्यतुलनिजशक्तिर्भगवती
स्थिता नित्यं देवी शरणगमनार्त्तिप्रशमनी ॥ २३ ॥
अभ्यासयोगादिह सन्निविष्टस्वान्तस्य शश्वन्नरपुङ्गवस्य।
समर्थता स्यादनधीतशास्त्रसद्भावभावे वसुधातलेऽस्मिन् ॥ २४ ॥

---

मूकजरादिना खड्गसाधनमपि तान् ईप्सितसाधनं रूपञ्च केचित् परपुरे मृतशरीरे प्रवेष्टुं शक्तिमिति वदन्ति ॥ १८ ॥ १९ ॥

अनाहतचक्रमाह हृदय इति। इन्द्रगोपो रक्तवर्णकीटविशेषः क्रोधीशाद्यैः ककाराद्यैः ठकारान्तैः क ख ग घ ङ च छ ज झ ञ ट ठ इति क्रोधीशद्वादश-भैरवसहितैर्द्वादशाक्षरैर्युक्तं द्वादशदलात्मकं कर्णिकान्तर्गतं मूलमन्त्रशक्त्या काकिन्या चाधिष्ठितं हंसेन चात्मना च दण्डोपेतैः सबिन्दुभिर्मण्डितम् ॥ २० ॥ २१ ॥

एतस्मिन्निति। एतस्मिन् स्थाने निविष्टमनसो योगिनः। कर्त्तुभूताः विमानस्थिताः दिव्यस्त्रियः कर्मभूताः अद्भुतरूपकान्त्या कलितम्। अन्यच्च त्रिकाल-विषयज्ञानञ्च अतुल्यं दूरात् श्रवणं दर्शनञ्च योगिनां सम्मेलनञ्च ॥ २२ ॥

विशुद्धचक्रमाह विशुद्धेति। श्रीकण्ठादिस्वरपरिगतैः अकारादिस्वरै-र्दलपरिगतैर्युतं तद्यथा—अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं

स्थानेऽत्र संसक्तमना मनुष्यस्त्रिकालदर्शी विगताधिरोगः ।
जित्वा जरामञ्जननीलकेशः क्षितौ चिरं जीवति वीतमृत्युः ॥२५॥

इह स्थाने चित्तं सततमवधायात्तपवनो
यदि क्रुद्धो योगी चलयति समस्तं त्रिभुवनम् ।
न च ब्रह्मा विष्णुर्न च हरिहरो नैव खमणि-
स्तदीयं सामर्थ्यं शमयितुमलं नापि गणपः ॥ २६ ॥

आज्ञानाम भ्रूयुगमध्ये दलयुग्मो-
पेतं पद्मं शारदचन्द्रमयूखाभम् ।
हाकिन्यत्रापि च देवौ दलयुग्मे
वर्णावन्त्यौ विन्दुयुतौ संस्मरणीयौ ॥ २७ ॥

ध्यानयोगनिरतस्य जायते पूर्वजन्मकृतकर्मणां स्मृतिः ।
क्षेत्रविन्दुनिलये च दूरतो दर्शनश्रवणयोः समर्थता ॥ २८ ॥
इह सन्निहितस्वचित्तवृत्तिः प्रतिमायाः प्रतिजल्पनं करोति ।
गमनञ्च पुरे परेषां पुनरुत्थानमप्यहो मृतस्य ॥ २९ ॥

निरालम्बां मुद्रां निजगुरुमुखेनैव विदिता-
मिह स्थाने कृत्वा स्थिरनिभृतधीः साधकवरः ।
सदाभ्यासोऽपश्यत्यमरनिलयानन्तरखिला-
नुडुश्रेणीं विष्णोरपि पदमुडूनामपि पतिम् ॥ ३० ॥

---

अं अः इति षोड़शस्वरैर्युक्तं धूमसमानवर्णं शाकिनीदेवताधिष्ठितं विशुद्धाख्यं पद्मं शरणगमनार्त्तिप्रशमनी जन्ममरणदुःखप्रशमनी अनधीतशास्त्रसद्भावे सद्भावत्वे इह स्थाने चित्तमेवावधाय अवधानं कृत्वा आत्तपवनो गृहीतपवनो योगी ॥२१—२६॥

आज्ञाचक्रमाह आज्ञानामेति । दलयुग्मोपेतं द्विदलयुक्तं अन्त्यौ वर्णौ हकार-चकारौ एतदुक्तं भवति भ्रुवोर्मध्ये सविन्दुकाभ्यां हकारचकाराभ्यां युक्तं द्विदलात्मकं शरदम्बुजसङ्काशं हाकिनीदेवताधिष्ठितम् आज्ञाकमलं मृतस्य पुनरावृत्तिर्न विद्यते जन्माभावात् ॥ २७—२९ ॥

ब्रह्माणं सुरवृन्दवन्दितपदद्वन्द्वं मुकुन्दं तथा
देवं देवनिकायनायकमपि प्रेताधिपं वारिपम् ।
शक्रं वह्निमपि प्रभुञ्च पवनं तार्क्ष्यञ्च यक्षेश्वरम्
गन्धर्वानपि किन्नरानपि गुणैः सिद्धान् प्रसिद्धानपि ॥ ३१ ॥
यक्षान् राक्षसपुङ्गवानपि मुनीन् दिव्यांश्च भव्याकृती-
नन्तःकान्तिकलाकलापकलितान् विद्याधरान् मातृकाम् ।
रङ्गोत्तुङ्गतरङ्गसङ्गतजलां स्वर्लोककल्लोलिनीम्
योगी पश्यति शश्वदञ्चितरुचिं तञ्चापि हेमाचलम् ॥ ३२ ॥

उत्तुङ्गपीवरपयोधरभारनम्र-
कम्राङ्गमङ्गजमतङ्गजमन्दयातम् ।
उल्लासिचिल्लियुगलं चकितैणशाव-
लोलेक्षणं विसरमप्सरसां तथैव ॥ ३३ ॥

समुत्तुङ्गैः शृङ्गैः स्थगितगगनाभोगककुभो
लसन्नानारत्नाकलितकटकान् भूधरवरान् ।
कुरङ्गैः सारङ्गैरपि च रमणीयां वनभुवम्
तथा गुर्वीमुर्वीं मण्डितविविधचैत्रसहिताम् ॥ ३४ ॥
तरङ्गैरुत्तुङ्गैरहिमकरमातङ्गनिकरैः
करालानाभीरैरपि जलधरैर्भूधरवरैः ।
तथा पारावारानमलसरितो वारिभरिताः
सहंसालीमालीमपि च सरसां सारसजुषाम् ॥ ३५ ॥

---

निरालम्बामिति । इह विन्दुनिलये आज्ञास्थाने निरालम्बां खेचरीं मुद्रां बद्ध्वा अमरनिलयः स्वर्गः तदूर्द्धम् अखिलाम् उडुश्रेणीं नक्षत्रश्रेणीं पश्यति विष्णोः पदम् आकाशम् । अर्क्कं प्रभुं सूर्य्यम् उल्लासिचिल्लियुगलं भ्रूयुगलम् । अप्सरसः विसरं समूहं पश्यति भूधरानपि पश्यति तान् कीदृशान् शृङ्गैः स्थगितं गगन-मण्डलं दिक् च यैस्तान् । कुरङ्गादिभीरमणीयां वनभुवञ्च पश्यति । मतङ्गोऽत्र

हंससम्मरालं वककोटिमालं तड़ित्करालान्तरवारिलीनम् ।
कलापिकान्तं सधवानुकूलं प्रवासिकालं नवमेघजालम् ॥२६॥

एतस्मिन् परमाद्भुताव्ययमहानन्दैककन्दे परे
स्थाने मानसमात्मनः स्थिरमतिः संयोजयेन्मुद्रया ।
योगी तन्मयतामुपैति प्रमकैवं तो निरालम्बया
पश्चान्नैजमहासुखं लयवशादाविर्भवत्यन्तरम् ॥ २७ ॥

लीने चेतसि तत्र विन्दुनिलये वक्रे रिवादौ कला
दृश्यन्ते तदनन्तरञ्च विलसद्रूपाः प्रदीपाङ्कुराः ।
बालस्येव दिवाकरस्य बहलद्योतिस्ततो द्योतते
यद्वा भूगगनान्तरालविलसज्ज्योत्स्नासपत्नं महः ॥२८॥

नित्यानन्द इति श्रियः पतिरिति श्रीवासुदेवः पुमान्
आत्मेत्यच्युत इत्यचिन्त्यमहिमा यो गीयते योगिभिः ।

---

मलहन्ती सरसां आलीं समूहं मरालं राजहंसम् । वककोटिः वका इति मयूर-प्रियकालं प्रीतिजनकत्वात् । सधवाः पतिसहिताः तासाम् अनुकूलं प्रवासिकालं प्रवासिनीनां कालं यमस्वरूपं नवमेघजालं नूतनमेघसमूहो यत्र तं कीदृशम् इति तड़ित्करालान्तरवारिलीनं तड़िता सौदामिन्या करालं भयानकं यदन्तर्वारि तत्र लीनं निमग्नम् ॥ २०—२६ ॥

एतस्मिन्निति । परमम् अद्भुतम् अव्ययं यन्महानन्दं तस्यैककन्दे मूलस्वरूपे परे स्थाने आत्मनो मानसं मुद्रया निरालम्बया स्थापयेत् । तदा योगी तन्मयतां ब्रह्म-मयताम् उपैति । वाकारः समुच्चये । इति निरालम्बया मुद्रया निजं महासुखं ब्रह्मा-नन्दसुखम् अन्तरं अन्तर्गतं लयवशादाविर्भवति प्रकाशते । अस्मिन् चेतसि लीने सति आदौ वक्रेः किरणस्था शिखा दृश्यन्ते । तदनन्तरञ्च प्रदीपाङ्कुराः अपरञ्च बालस्य सूर्यस्य उद्योतः प्रकाशः ततो द्योतते प्रकाशते । यद्वा तन्महस्तेजः प्रकाशते आवि-र्भवति कीदृशम् आकाशमध्ये विलसत् यत् ज्योत्स्नारश्मयस्तत्तुल्यम् । अस्मिन् स्थाने अव्ययः परमेश्वरः साक्षादात्मा साक्षिस्वरूपी भवति ॥ २७ । २८ ॥

स एव क इत्याह नित्यानन्द इत्यादि । यथा अम्बरान्तरगतो राहुश्चन्द्रार्कयो-

स्थानेऽस्मिन् परमेश एष भगवान् व्यक्तो भवत्यव्ययः
साक्षी राहुरिवाम्बरान्तरगतश्चन्द्रार्कयो र्मण्डले ॥ ३९ ॥
विश्वस्यायतनं महद्भगवतः स्थानं तदेतत्परम्
यत्रारोप्य समीरणं सुकृतिनः प्राणप्रयाणे नराः ।
दीव्यन्तं परमं पुराणपुरुषं वेदान्तवेद्यं कविम्
विश्वाद्यं प्रविशन्ति सन्ततमहानन्दैककन्दं विभुम् ॥ ४० ॥
सहस्रारपद्मं विसर्गादधस्तादधो वक्त्रमारक्तकिञ्जल्कपुञ्जम् ।
कुरङ्गेण हीनस्त्रिशृङ्गस्तदन्तःस्फुरद्रश्मिजालः सुधांशुः समास्ते ॥ ४१ ॥
तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मं यदाधारभूतं सुषुम्नाख्यनाड्याः ।
तदेतत् पदं दिव्यमत्यन्तगुह्यं सुरैरप्यगम्यं सुगोप्यं सुयत्नात् ॥ ४२ ॥
एतत् कैलाससंज्ञं परमकुलपदं बिन्दुरूपी स्वरूपी
यत्रास्ते देवदेवो भवभयतिमिरध्वंसहंसो महेशः ।
भूतानामादिदेवो रसविसरसितां सन्ततामन्तराले
सौधीं धारां विमुञ्चन्नभिमतफलदो योगिनां योगगम्यः ॥ ४३

---

मण्डले इति दृष्टान्तच्छलेन पिङ्गलायाश्चन्द्रसूर्यात्मकत्वात् । इडापिङ्गलयोर्मध्ये सुषुम्नाया भीमत्वात् सुषुम्ना राहुरिति प्रतिपादिता ॥ ३९ ॥

विश्वस्येति । विश्वस्य प्रपञ्चस्वरूपस्यायतनं तदेव भगवतः स्थानं यत्र स्थाने प्राणस्थाने समीरणमारोप्य प्रापय्य सुकृतिनो नराः दीव्यन्तं क्रीडन्तं पुरुषं प्रविशन्ति इति । अतएव पुरा अजरामरं जरामृत्युविहीनं वेदान्तेन वेद्यं विश्वाद्यं विश्वादौ भवं जन्म यस्य तं प्रविशन्ति । महानन्दस्यैकमूलप्रभवं विभुम् ॥ ४० ॥

सहस्रदलपद्ममाह सहस्रारपद्ममिति । आवरणदलं सहस्रदलपङ्कजमित्यर्थः । विसर्गस्य रूपातीतस्य कुलादिपदस्यावाग्भव्या इत्यर्थः । अधोमुखे आरक्तकिञ्जल्कपुञ्जं यत्र रक्तकेशरमित्यर्थः । कुरङ्गेण हीनः चिह्नरहितकलङ्कः त्रिशृङ्गेण युक्तः त्रिकोणाकारः स्फुरद्रश्मिजालः स्फुरत्प्रभासमूहः सुधांशुरमृतकरः समास्ते ॥ ४१ ॥

तदन्तर्गतमिति । तन्मध्ये ब्रह्मरन्ध्रं सूक्ष्माकारं सुषुम्नाख्यनाड्या आधारभूतायाः सुषुम्नैव निष्कलचैतन्यात्मकपरमेश्वरस्योपाधिभूतचित्कला इन्दुमण्डलमध्यवर्तिनी ब्रह्मरन्ध्रमाधारीकृत्य देवमनुगता इत्यर्थः । यथाप्युक्तं योगार्णवे—मध्यस्थं च

नस्यास्य ध्यानमात्रेण पुंसां संसारेऽस्मिन् सम्भवो नैव भूयः।
यासं सन्ततभ्यासयोगात् कर्त्तुं हर्त्तुं स्याच्च शक्तिः समग्रा ॥४४॥
ने परे हंसनिवासभूते कैलासनाम्नीह विधाय चेतः।
ो गतव्याधिरधःकृताधिबाधश्चिरं जीवति मृत्युमुक्तः ॥ ४५ ॥
स्थानेऽस्मिन् क्षयवृद्धिभाववर्जिता नित्योदिताधोमुखी
बालादित्यनिभप्रभा शशभृतः सास्ते कला षोडशी।
बालाग्रस्य विखण्डितस्य शतधा चैकेन भागेन या
सूक्ष्मत्वात् सदृशी निरन्तरगलत्पीयूषधाराधरा ॥ ४६ ॥
एतस्याः परतः स्थिता भगवती भूताधिदेवाधिपा
निर्वाणाख्यकलार्द्धचन्द्रकुटिला सा षोडशान्तर्गता।
बालाग्रस्य सहस्रधा विगलितस्यैकेन भागेन या
सूक्ष्मत्वात् सदृशी त्रिलोकजननी या द्वादशार्कप्रभा ॥४७॥

---

तदेवाधारमव्यक्तमिति। यदेतद्विसर्गेऽस्मिन्नक्षयपदं तदेव कैलासाख्यविन्दु-
पुम्प्रकृत्यात्मकः विसर्गः। प्रकृतिर्माया विन्दुसर्गात्मिका हंसः। तदात्मकमिदं
इति। कीदृक् भूतानामादिभूतः आदिस्वरूपः। सौधीं धारां चन्द्रक्षे
ारे मुञ्चन्। धारां कीदृशीं रसविसरसितां रसो द्रव्यविशेषः। तत्र सितां
योगगम्यो भगवान् योगिनामभिमतफलप्रदः। अत्र कैलासस्थाने नियमित-
। तत्त्व परतः ॥ ४२ । ४३ ॥
फलितमर्थं दर्शयति स्थानस्यास्येति। इत्यादि सुगमम् ॥ ४४ ॥
ाने परे इति। स्थाने परमहंसस्य निवासभूते गता व्याधयो यस्य सः। अधःकृता
ोव्याधयश्च येन सः। बालादित्यसमप्रभा शशभृतश्चन्द्रस्य षोडशी कला अति-
। शशभृतः कीदृशस्य बालाग्रस्य शतधा विखण्डितस्य एकैकभागेन सूक्ष्मत्वात्।
ी निरन्तरगलत्पीयूषधाराधरेव भाति पीयूषधारा पीयूषवर्षमेघतुल्या ॥४५।४६॥
एतस्या इति। एतस्याः षोडशकलायाः परतः परस्मिन् भूतानामधिपो
देवस्याधिपा भगवती स्थिता निर्वाणसंज्ञाकला निर्वाणषोडशीकला तां गता।
ी बालाग्रस्य सहस्रधा विभक्तस्य दलितस्य एकेन भागेन सूक्ष्मत्वात् सदृशी
ार्कतुल्या प्रभा कान्तिर्यस्याः ॥ ४७ ॥

निर्वाणाख्यकलापदोपरिगता निर्वाणशक्तिः परा
कोट्यादित्यसमप्रभातिगहना बालाग्रभागस्य या।
कोट्यंशेन समा समस्तजननी नित्योदिता निर्मला
नित्यानन्दपदस्थलोकविगलद्धारा निरालम्बना ॥ ४८ ॥
एतस्याः परतः परात्परतरं निर्वाणशक्तेः पदम्
शैवं शाश्वतमप्रमेयममलं नित्योदितं निष्क्रियम्।
तद्विष्णोः पदमित्युशन्ति सुधियः केचित् पदं ब्रह्मणः
केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम् ॥ ४९ ॥
आरोप्यारोप्य शक्तिं कमलजनिलयादात्मना साकमेषु
स्थानेष्वाज्ञावसानेष्ववस्थितहृदयश्चिन्तयित्वा क्रमेण।
नीत्वा नादावसानं खगतकुलमहापद्मसद्मान्तरस्थाम्
ध्यायेच्चैतन्यरूपामभिमतफलसम्प्राप्तये शक्तिमाद्याम् ॥५०
साक्षाल्लाक्षारसाभं गगनगतमहापद्मसद्मस्थहंसाम्
पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य।
चक्रे चक्रे क्रमेणामृतरसनिसरैस्तर्पयेद्देवतास्ता
डाकिन्याद्याः समस्ताः कमलजपदगां तर्पयेत् कुण्डलीं ताम्॥
इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये पञ्चमः पटलः

---

निर्वाणेति। निर्वाणाख्यकलापदं स्थानं तस्योपरि अधोगता निर्वाणशक्तिः स्थिता। कोट्यादित्यसमा प्रभा यस्याः सा अतएवातिगहना कीदृशी बालाग्रभागशतभक्तः कोट्यंशेन समा नित्यानन्दपदस्थानं शैवपदम्। तत्र उदकसंहती विगलद्धारा यस्याः निरालम्बना अवलम्बनरहिता ॥ ४८ । ४९ ॥

आरोप्येति। कमलजनिलयात् मूलाधारात् शक्तिम् आरोप्य आत्मना साकम् एषु स्थानेषु शक्तिं चिन्तयित्वा क्रमेण नादावसानं नीत्वा आकाशगतकुल महापद्मेव सद्म गृहं तस्यामन्तस्थां चैतन्यरूपां ध्यायेत् ॥ ५० ॥

साक्षादिति। दिव्यामृतौघं पीत्वा गगनगतमहापद्मस्थितहंसां कलस्य शरीर

## षष्ठः पटलः ।

स्वयम्भुलिङ्गं निजयोनिमध्यवलयान्तरे हृत्सरसीरुहान्तः ।
बालाख्यं चेतरमन्तराले वदन्ति सन्तो गगनाम्बुजेऽन्ये ॥१॥
यद्बीजं वाग्भवाख्यं द्रुतकनकनिभं तत् स्वयम्भूतलिङ्गम्
स्थाने ध्यात्वा हृदम्भोरुहकुहरगते बाणलिङ्गे द्वितीयम् ।
कामाख्यं बन्धुजीवप्रसरसमरुचिं शारदेन्दुप्रभावम्
तार्तीयीकन्तु बीजं त्वितरपदगतं चिन्तयेच्छात्मरूपः ॥ २ ॥
प्राणान् योनिगतान् विधाय मनसा ध्यायन्ति तां भारतीम्
बीजाख्यां निजयोनिरन्ध्रनिलयादामाभिरन्ध्रोत्थिताम् ।

---

मध्यदेशं मूलाधारं विशेत् । ततः प्रतिचक्रे स्थिता डाकिन्याद्याः यदि समन्तादेव ततोऽमृतरससमूहैस्तर्पयेत् । ततः कमलजपदगां मूलाधारस्थां कुण्डलिनीञ्च तर्पयेत् ॥ ५१ ॥

इति त्रिपुरासारटीकायां पदार्थादर्शे पञ्चमः पटलः ॥

---

एवमाधारेषु योगविशेषानुक्त्वा मूलाधाराद्याधारेषु स्वयम्भुलिङ्गबाणादिविशेषान् वक्तुमुपक्रमते स्वयम्भुलिङ्गमिति । योनिब्रह्मरन्ध्रान्तरामिति त्रिकोणाकारे प्रागुक्त-स्थाने स्वयम्भुलिङ्गं याति लयं यत्र जपेदिति तल्लिङ्गं लिङ्गञ्च चराचरमिति हृत्-सरोजवाम् लिङ्गमिति । इतरं लिङ्गं परलिङ्गमित्यर्थः । अन्तरालभ्रुवोर्मध्ये इति । अन्ये तु इतरपदम् एवं वर्णयन्ति । अन्तराले बिन्दौ स्थितं तदितरं लिङ्गम् अन्ये तु गगनाम्बुजे विसर्गाख्ये परबिन्दुनिर्मलपदे इत्यर्थः ॥ १ ॥

श्रीमूलविद्यायास्त्रयाणां बीजानां स्वयम्भुबाणलिङ्गयोर्ध्यानमाह । यद्बीज-मिति । यद्वाग्भवाख्यं प्रथमबीजं निर्मलकाञ्चनसङ्काशं मूलाधारे स्वयम्भु-लिङ्गात्मकं ध्यायेत् । यत्कामाख्यं मध्यबीजं कुसुमसङ्काशं हृदयकमल-कर्णिकामध्ये बाणलिङ्गं तृतीयबीजं शारदेन्दुसङ्काशम् आज्ञास्थाने परलिङ्गात्मकं ध्यायेदित्यर्थः ॥ २ ॥

बालार्कारुणतेजसीं भगवतीं ये सिद्धलिङ्गाकृतिम्
तेषामेव कवित्वसम्पदतुला पीयूषनिःस्यन्दिनी ॥ ३ ॥
सिन्दूरारुणसुन्दरीभिरखिलं प्रोल्लासयन्तीं कुलम्
हृत्पद्मान्तरगां प्रभाभिरनिशं ये वाग्लिङ्गाकृतिम्।
आबिन्दोरुदितामनन्यमनसो ध्यायन्ति दिव्याङ्गनाः
कामार्त्ता विलपन्ति लोलमनसस्तेषां पदान्ते भुवि ॥ ४ ॥
ये गौरीमितराभिधां निजरुचा ध्यायन्ति लिङ्गाकृतिम्
बिन्दुस्थानगतां सुधाकरकरश्रीहारिणीप्लाविताम्।
अर्द्धेन्दुप्रतिमां विसर्गगमहापद्मस्थितां बिभ्रतीम्
धारां विद्रुमपाटलामृतमयीं ते सम्पदामास्पदम् ॥ ५ ॥

त्रयाणां लिङ्गानामतिबहलतेजःस्फुतिजुषाम्
त्रिषु स्थानेष्वेषु स्थिरमिहितधीः साधकवरः।
जपेन्मन्त्रं लक्षं सरसकुसुमैर्ब्रह्मतरुजै-
स्त्रिमध्वक्तैर्होमं तदनु निशि चारेण जुहुयात् ॥ ६ ॥
निःशङ्कं हरिणाङ्कमम्बरतलात् पातालमूलं गतम्
तत्रस्थेन दिवाकरेण पुटितं कृत्वा समादाय च।

---

एतेषां बीजत्रयाणां जपध्यानफलविशेषफलत्वाद प्राधान्याद् योगिगतामित्यादि। सिन्दूरारुणसुन्दरीभिः प्रभाभिः अखिलं कुलं मूलाधारादिचक्रमित्यर्थः। आबिन्दोरुदितां बिन्दुस्थानपर्य्यन्तं सुधाकरश्रीहारिणा महेशेन प्लाविता। एवम्भूतां लिङ्गाकृतिं ये ध्यायन्ति ते सम्पदां पदं स्थानमिति। श्लोकत्रयेण साकल्येन जपतां ध्यानविशेषत्वाद त्रयाणां लिङ्गानामिति। जपेल्लक्षमिति। यस्मिन् यद्बीजस्थानं तत्र तस्य लक्षजपः। तेन त्रिबीजेन लक्षं समुदायजपस्तु त्रिलक्षमिति नियमः। ब्रह्मतरुजैः पलाशकुसुमैः। निशि चारेण इडायां वायौ गते सति ॥ १—६ ॥

कार्य्यविशेषानाह निःशङ्कमिति। हरिणाङ्कः इडानाडीस्थितवायुः कार्य्ये कारणोपचारः। अम्बरतलात् नासास्थानात् पातालमूलं मूलाधारं ब्रह्मरन्ध्रगतं तत्रस्थेन दिवाकरेण पिङ्गलावायुना पुटितम् उभयवायोरैक्यं कृत्वा तं वायु-

राहौ राहुगते कपालिकरणप्रस्तावनापण्डितः
कुण्डे हस्तकरण्डकेन जुहुयाद्धोमोऽयमत्यद्भुतः ॥ ७ ॥
एवं वत्सरमेवमेव शिवधी र्मर्त्यो जुहोतीह यः
सद्यो मृत्युमसौ विजित्य वपुषः पुष्टिं विशिष्टां दधत् ।
दर्पं दर्पकसन्निभो मृगदृशां भञ्जन् मुखश्लाङ्गना-
श्रेणीश्रीमदरालकुन्तलचयो जीवेदनेकाः समाः ॥ ८ ॥

आदाय राहौ राहुगते कुण्डगोलमुखे हस्तकरण्डकेन हस्तरूपेण मनसा जुहुयात् । कपालिकरणप्रस्तावनापण्डितः कपालिकरणाख्यप्रक्रियायां प्रायः अन्तःकरणं विद्धुरित्यत्र पण्डित इत्यर्थः । गुप्तार्थस्तु किञ्चित् प्रकाश्यते । इरिणाद्रव्य-विशेषः स्थानविशेषः स्थानविशेषगतं स्थानविशेषस्थदिवाकरेण द्रव्यविशेषेण पुटितं मिश्रितं कृत्वा राहौ राहुगते कुण्डे स्थानविशेषे हस्तकरण्डकेन हस्तरूपस्रुवेण जुहुयादिति । द्रव्यसंज्ञा अप्रकाश्या एतदर्थकथने शिष्टोपहास इति तन्त्रचूडा-मणिश्च राहुः शिरः शिरो वा गृहीत्वा खड्गेन विशेत् । सूर्य्यात्मकं समादातुं यदा तस्यां तिथौ श्रुते । पातालगम्या देवेश व्योमस्थानाद्दिवाकरम् । पतितं राहुचक्रे तु कुण्डैक्यं प्रपश्येत्ततः । राहुचक्रेण तत्कुण्डे होमं कुर्य्यात्तु तद्दिने । तत्र यज्जायते द्रव्यं तदेव कुण्डगोलकम् । कुण्डं शिवसहायेन गोलकं शिवदैवतः । एतत्त्रयाणां मध्ये तु स्वयम्भुकुसुमं महत् । कश्चिद्गन्धर्वराजेन लभ्यते वा न वा विभो ! । यदि तल्लभ्यते देवि ! लाक्षारससमन्वितम् । कस्तूरीकुङ्कुमाभ्याञ्च वटीं कृत्वा तु शोषयेत् । मन्त्रराजं समालिख्य प्रयोगं तेन निर्वपेत् । तत्तिथिं समनु-प्राप्य स्वयमुत्तिष्ठते कुलम् । अमलक्षोभयोर्देव ! भोक्तुं देवी न संशयः । सुप्ताद्दि-दोषदुष्टा ये मन्त्रा विश्वाश्च कीलिताः । प्रबुद्धास्तत्प्रयोगेण यावत् सा पुनरागता । द्वितीयायां गते देवि ! इच्छा या सा कलावती । तिथिक्रमेण सा देवी पौर्णमास्याः फलप्रदा इति । एतदर्थप्रकाशेन देवताशापो जायते इति । तत् कार्यं बहु-सूचितमिति ॥ ७ ॥

होमनियमं फलञ्चाह एवमिति । दर्पः कन्दर्पः तत्तुल्यः सन् मृगदृशां दर्पं भञ्जन् अनेकाः समा जीवेत् चिरजीवी भवेदित्यर्थः । कीदृक् अरालः कुटिलाकारः कुन्तलचयः केशसमूहो यस्य सः । भव्याङ्गनाश्रेणीनां श्रीर्विद्यते यस्य पश्चात् भव्या-ङ्गनाश्रेणीश्रीमांश्चासौ अरालकुन्तलश्चेति कर्मधारयः ॥ ८ ॥

ततो देवीं ध्यायेत् परिणतशरच्चन्द्रसदृश-
प्रसन्नस्मेरास्यामलिकलभसङ्काशकबरीम् ।
विराजन्तीं नेत्रैर्विकचनवनीलोत्पलनिभै-
स्त्रिभिर्दन्तश्रेणीरुचिविजितहारावलिरुचिम् ॥ ९ ॥

बन्धूकसान्ध्यघनबन्धुरकान्तिकान्तम्
मन्दस्मितांशुविशदीकृतमुद्वहन्तीम् ।
दन्तच्छदं रुचिरकुण्डलमण्डलञ्च
गण्डस्थलीयुगलखण्डसुधांशुपाण्डु ॥ १० ॥

उत्तुङ्गसङ्गतपयोधरभारनम्र-
कम्रा वनम्रविलसत्त्रिवलीतरङ्गाम् ।
गम्भीरनाभिविवरां वररामरम्भा-
स्तम्भोपमोरुयुगलामरुणाङ्घ्रिपद्माम् ॥ ११ ॥

कलां मौलाविन्दोर्गलदमलपीयूषविसराम्
वहन्तीं सन्तानप्रसवरचितं शेखरमपि ।
वसानां सद्वासोहिमकिरणनिर्मोकविशदम्
महाविन्द्यारूढां जठरशशभृच्छल्कोटिधवलाम् ॥ १२ ॥

हस्ताभ्यामक्षमालां स्फटिकमणिमयीं ज्ञानमुद्राञ्च भद्राम्
बिभ्राणां दक्षिणाभ्यां मणिमयमुकुटां पुस्तकञ्चाभयञ्च ।
वामाभ्यां रत्नकाञ्चीपरिवृतजघनां रत्नकेयूरहाराम् ।
दिव्यालङ्कारयुक्तां त्रिभुवनजननीं दिव्यगन्धानुलिप्ताम् ॥१३॥

---

ततो देवीं ध्यायेदिति सुगमम् ॥ ९ ॥

कीदृशीं देवीं दन्तच्छदं वहन्तीं कीदृशं बन्धूकपुष्पं सन्ध्यासम्बन्धि यद्घनं तेषं यन्मनोहरकान्ति तद्वत् कान्तं कमनीयम् । मन्दस्मितांशुना विशदीकृतम् । पुन कीदृशीं उत्तुङ्गपयोधरभारनम्रकम्रावनम्रविलसत्त्रिवलीतरङ्गाम् उत्तुङ्गो यः पयोधरभारस्तेन नम्रं कम्रं अमवलम्बं कमनीयमुदरं तत्र त्रिवल्याकारतरङ्गो यस्य

समुद्गिरन्तीमपि शास्त्रजालं निरन्तरं कान्तिकलासमग्राम्।
विनम्रदेवासुरवृन्दमौलिमालारजोराजितपादपद्माम् ॥१४॥
ध्यात्वा वागीश्वरीं तां गगनगतमहाविन्दुपीठादतीत-
स्थानं चानीय तस्मादपि तदनु नयेदागतस्थानमेनाम्।
शान्तातीतन्तु तस्मादनुपममहिमा सूर्य्यचक्रन्तु तस्मा-
द्व्योमाम्भोजं ततश्चाखिलभुवननुतामानयेत् प्रेतभूमिम् ॥१५॥
प्रेतस्थानादर्द्धचन्द्रं ततस्तामारम्भं तु प्रापयेत् सेतुबन्धम्।
तस्माच्चैवं व्योम तस्मादमेयस्थानप्राप्तां चिन्तयेदीश्वरस्य ॥१६॥
तस्माद्रुद्रस्यालयं रुद्रगेहाद्विष्णुस्थानं प्रापयेद्देवदेवीम्।
विष्णुस्थानाद्ब्रह्मणः स्थानमेनां ब्रह्मस्थानात् कुण्डलीगेहमध्यम् १७
सहस्रदलशोभिते रुचिरकर्णिकाकेशरे
लसन्महसि कुण्डलीभवनपङ्कजे तां स्थिताम्।
विसर्गगखगाख्यविन्दुविलसत्सुधाधारया
ततः समभिषेचयेद्भगवतीमविच्छिन्नया ॥ १८ ॥

---

ताम्। उरुमंहाम् यो रामकदलीस्तम्भः स एव उपमा ययोः ऊर्वोः ताम् अरुणमङ्घ्रि पद्मं यस्याः ताम्। तथा इन्दोः कलां मौलौ वहन्तीं कीदृशीं कलां गलत्पीयूषसमूहाम्। तदुत्प्रेक्षते सन्तानकप्रसवरचितं शेखरमिव कल्पवृक्षपुष्परचितं शेखरमिव किरीटमिव। हिमकरश्चन्द्रः निर्मोकी मुक्तकञ्चुकः तद्वद्विशदं निर्मलं तथा सहासो वसानां तथा महाविम्बारूढां गगनोपरि विन्दुस्थानमारूढां तथा जठरशशभृत्कोटिधवलां परिपूर्णकोटिचन्द्रतुल्याम् ॥ १०—१४ ॥

एवं वागीश्वरीं ध्यात्वा विन्दुपीठात् विन्दुपीठोऽर्द्धे अतीते स्थाने आनयेत्। तस्मादतीतस्थानात् आतपस्थानं तत आतपस्थानात् शान्तातीतं तस्माच्छान्तातीतात् सूर्य्यचक्रं ततो व्योमाम्भोजं ततः प्रेतस्थानं शिवस्थानं प्रेतस्थानादर्द्धचन्द्रं तस्मादारम्भं ततः सेतुबन्धं ततः पुनर्व्योम तत आमयम् ईश्वरस्य ततो रुद्रालयः रुद्रगेहाच्छक्तिस्थानम् ॥ १५ ॥ १६ ॥

तस्मात् कुण्डलिनीभवनं किमित्याह सहस्रेति। सहस्रदलशोभिते विसर्गगतो

अनेन शश्वद्विहितेन देवी-
ध्यानेन नाशं समुपैति मृत्युः।
याः सिद्धयो दिव्यगणाधिपस्य
भवन्ति ता अप्यचिरेण पुंसाम्॥ १९॥

आधाराद्दुल्लसन्तीमकुलगतमहापद्मपर्यन्तमन्त-
र्ध्यायन्तीं ब्रह्मनाड्या स्फुरदमलरुचिप्रख्यरूपां भवानीम्।
ये देवीं लिङ्गरूपां भुवि विमलधियो भावनामात्रगम्याम्
निर्धूताशेषपापा निखिलगुणयुता ज्ञानिनस्ते भवन्ति॥२०॥

ये गोक्षीरतुषारहारधवलप्रोद्दामतेजश्छटा-
च्छायोल्लासितरोमकूपविवराशेषाङ्गलिङ्गाकृतिम्।
वागीशीं धवलाम्बुजान्तरगलत्पीयूषधाराद्रवै-
रासिञ्चन्ति समन्ततोऽखिलवपुस्त्यक्ष्यन्ति ते मृत्यवः॥२१॥

लिङ्गाकारधरां सुरासुरयुतां सौषुम्नमाड्यन्तरे
देवीमञ्जनपुञ्जमेचकरुचिं सिञ्चन्ति शश्वद्भुवि।
ये दिव्यामृतधारया प्रचुरया कालाग्रदूतीं नृणाम्
रूपोन्मूलनदृष्टिपाटवधरा तेषां कुतो विस्रसा॥ २२॥

लाक्षारसस्नपितभग्नमृणालनाल-
तन्तूपमां स्मरति यस्त्रिपुरां कुलान्तः।
तं विस्मरन्ति मितचारुदृशः स्मरार्त्ता
वामभ्रुवो रतिपतिप्रतिमं स्मरन्ति॥ २३॥

सिन्दूरपूरपरिपिञ्जरितामिव द्याम्
लाक्षारसार्द्रितमिव क्षितिमण्डलञ्च।

---

ब्रह्मरन्ध्रगाख्यबिन्दुः तत्र विलसन्ती या सुधाधारा तया देवीं समभिषेचयेत्। ननु कुण्डलिनीगेहं मूलाधारं तत् कथमुक्तमिदं सत्यं मूलादिब्रह्मरन्ध्रान्तं कुण्डली-

ध्यायन्ति ये रुचिचयैर्हरवल्लभायां
लज्जां विहाय भुवि तानुपयान्ति कान्ताः ॥ २४ ॥

शक्तिं हंसेन युक्तां कमलजनिलयाद् ब्रह्मनाड्यन्तराले
निष्यन्दच्चन्द्रबिम्बान्तरगलितसुधाबिन्दुसन्दोहपद्मम् ।
नीत्वा तत्रैव नित्यं स्मरति खगगतामात्मना शक्तिमाद्याम्
यस्तस्याजाण्डखण्डप्रलयमपघनं स्याद् घनं मृत्युमृत्योः ॥२५॥

पीताभां स्तम्भनादौ शशधरधवलां शान्तिकादौ सुधूम्रा-
मुच्चाटादौ जवाभां त्रिभुवनजनताकर्षणे कामणे च ।
नित्यां नित्यं विशुद्धस्फटिकमणिनिभां खेचरत्वादिसिद्धौ
मोक्षे साक्षादपेताम्बुदगगननिभां भावयेच्छक्तिगस्याम् ॥२६॥

मार्गेऽस्मिन्नवलक्ष्मक्षयपदप्राप्तौ ततो लक्षये-
न्मन्त्राणामिह येन सिद्धिरतुला पञ्चप्रकारापि च ।
आधारध्वजनाभिदेशहृदये कण्ठे तथा लम्बिके
भ्रूमध्येऽपि च भूतनाथबिलये स्थाने नवान्तेऽपि च ॥२७॥

आधारे कनकप्रभां परिलसद्दीपाकृतिं षण्मुख-
स्थाने नूतनभानुकान्तिसदृशां नाभौ हृदम्भोरुहे ।

भवनं विदुः । आद्यमाम्नाय भवने ज्ञानगीपत्नी विराजते । मायादिषण्पदं गत्वा राजते निजमन्दिरे । ज्ञानदा तव सा देवी कुण्डली परदेवता । अविद्याविषयी-दीनाद्भवच प्रकाशिता । क्रोडीकृत्य जगत् सर्वं कारागारमिव स्थितेति । शक्ति-मिति शक्तिं कुण्डलिनीं हंसेन युक्ताम् आत्मना सह हंसमन्त्रेण मूलादिस्थानात् सहस्रदलपद्मं नीत्वा यः स्मरति तस्यापद्घनं निर्वीतं भवति ॥ १७—२५ ॥

कर्मविशेषे ध्यानमाह पीताभामिति । काम्यजपमाह मार्गेऽस्मिन्निति । अस्मिन् मार्गे सुषुम्नावर्त्मनि वक्ष्यमाणस्थानेषु अक्षयफलप्राप्तौ मोक्षफलप्राप्तौ लक्षयेत् ध्यायेत् । सिद्धिरतुला पञ्चप्रकारा चेति सिद्धयः । पातालगुटिकाञ्जनखड्गमुद्राद्या अधिका मन्त्रयोगाख्यज्ञानाख्या चेति ॥ २६ ॥ २७ ॥

तत्र किं रूपेण ध्यात्वा जप्तव्यमित्याह आधार इति । षण्मुखस्थाने षड्दलोपस्थाने

दीपाकारनिभां तथा खरकरोद्योतप्रभां भावयेत्
कण्ठे दीपशिखाकृतिं मणिगणोद्योतां भ्रुवोरन्तरे ॥२८॥
नवान्ते च ज्योतिर्भवभयतमोध्वंसकुशलम्
तदेतद्विन्द्वाख्यं निरतिशयशर्मोर्मिजनकम् ।
दुरापं पापैर्यत् त्रिभुवनधरं त्रैपुरमिति
प्रतीतं तत्त्वानां यदुपरिगतं यच्च परमम् ॥ २९ ॥

इति त्रिपुरासारसमुच्चये षष्ठः पटलः ।

---

## सप्तमः पटलः ।

अथामरेन्द्रैरपि दानवेन्द्रैर्धृतं प्रसिद्धैरपि सिद्धवर्गैः ।
सौभाग्यसम्पत्तिगुणैकहेतुं यत्त्रैपुरं तत् कथयामि मन्त्रम् ॥१॥
कर्पूरक्षोददिग्धाखिलतनुरमलः स्नानपूतो वसानः
क्षौमं श्रीखण्डपङ्कस्फुटरचितलसच्चित्रको नेत्रयुग्मम् ।
मन्त्री कृत्वाञ्जनाक्तं मधुरसविरसप्राप्तहर्षप्रकर्ष-
स्ताम्बूलग्रासपूर्णारुणमुखकुहरश्चालिखेन्मन्त्रराजम् ॥२॥

---

स्वाधिष्ठाने इत्यर्थः । नूतनं प्रातःकालीनसूर्य्यवर्णसदृशम् । खरकरद्योतः खरस्त्रीमूल-द्योतनं यस्य तत्प्रभां ध्यायेत् । नादान्ते नादान्तपर्य्यन्तम् ऊर्द्ध्वं गच्छति यत् ज्योतिस्त-देव विन्द्वाख्यम् अतिशयानन्दजनकं पापात्मभिर्न राग यत्त्रैश्वरं परमं महः । प्रतीतं ज्ञातव्यं चतुर्विंशतितत्त्वानामुपरिगतञ्च ॥ २८ २९ ९ ॥

इति त्रिपुरासारसमुच्चयटीकायां पदार्थादर्शे षष्ठः पटलः ।

---

एवं मूलाधारस्थानेषु वाग्भवादिबीजानां स्वयम्भुवाणलिङ्गात्मकत्वे ध्यानविशेषा-श्चोक्ता अनन्तरं सौभाग्यलक्षणादि सर्वैश्वर्य्यपदं मन्त्रमाह अथामरेन्द्रैरित्यादिना ॥१॥

कर्पूरक्षोददिग्धाखिलतनुः कर्पूरक्षोदेन भग्नकर्पूरेण दिग्धा लिप्ता अखिल-तनुर्येन सः । अमलमिन्द्रियमनोवृत्तिरित्यर्थः । क्षौमं पट्टवस्त्रं वसानः श्रीखण्ड-

कस्तूरिकागुरुसुधाकरखण्डकुण्ड-
गोलीत्थजाङ्गलगुडै: सपटीरपङ्कै:।
युक्तै: स्वयम्भुकुसुमेन विशालभूर्ज-
पत्रे लिखेदविवरे तपनीयसूच्या ॥ ३ ॥
लिखेद्भूपपत्राणि वृत्तं तदन्त-
र्बहिर्मासपत्राणि तत्राष्टदेशे।
पुनर्भूपत्राणि तेषां दलानाम्
बहिर्दन्तपत्राणि चारूणि धीर: ॥ ४ ॥
तत: कर्णिकायां महायोनिमध्ये
लिखेद्वाग्भवं कामबीजञ्च शक्तिम्।
तयोरूर्द्ध्वत: कारयेद्धंसदेवो-
परिष्टाज्जगन्नायिकां षोड़शारे ॥ ५ ॥
तत: षोड़शेशस्वरान् द्वादशारे
पुन: कामबीजं लिखेत्तत्र बीजम्।
लिखेद्वासरेशस्वरैर्भिन्नमेवम्
विधायान्त्यबीजं परे षोड़शारे ॥ ६ ॥

---

पङ्केन स्फुटरचितं लसत्तिलकं पुण्ड्राकारं येन स तथा। नेत्रयुग्मम् अञ्जनाक्तं कृत्वा मधुरसविसरपलीत्प्राप्तो यो हर्ष: तेन प्रकर्ष: प्रकृष्ट: तथा ताम्बूलग्रासपूर्णा-रुणमुखकुहर: समुदितान्तर्वर्त्ति: स्वर: स्वरूपवेशोऽम्बिकाया: पादाम्बुजभङ्गाय-मानमानस:। स्वगुरुचरणप्रणामपुर:सरं यन्त्राणि विलिखेत् इत्याह कर्पूरधौद-हितशाङ्ग इत्यादिना ॥ २ ॥

यन्त्रलिखनद्रव्याण्याह कस्तूरिकेत्यादि। सुधाकरखण्डं कर्पूरखण्डं पटीरं रक्तचन्दनं कुण्डगोलादिद्रव्यं गुरुवक्त्रगम्यं दैवतानामपि दुर्लभत्वात् न प्रकाशितम्। भूर्जपत्रे अविवरे अच्छिद्रे तपनीयसूच्या सुवर्णशलाकया ॥ ३ ॥

यन्त्रलिखनप्रकारमाह लिखेद्भूपपत्राणीत्यादिना। भूपा: षोड़शसंख्यका राजान:। तथाहि माघ: अम्बरीष: शशविन्दु: गय: पृथु: भरतस्तान खरत: खाण्डः

